ಉಂಟುಮಾಡುವಶಕ್ತಿಯು ಎಂದರೆ 'ಜಿಜ್ಞಾಸಾವಿಷಯಯೋಗ್ಯಜ್ಞಾನಜನಕತಾವಚ್ಛೇದಕರೂಪವತ್ತ್ವವು' ಪದಕ್ಕಿದೆ ಎಂದರ್ಥ.

**विजयीन्द्रतीर्थीयम्**— गामानयेत्यत्र कारकपदत्वावच्छिन्नगोपदप्रयोज्या जिज्ञासा क्रियान्वयज्ञानेच्छा तद्विषयत्वयोग्यक्रियान्वयज्ञानं तद्विषयः क्रियान्वयः । तत्प्रतियोगित्वाभिमतत्वं क्रियाकारकयोराकाङ्क्षा । तादृशज्ञानजनकतावच्छेदकरूपं क्रियापदत्वादिकं पदस्याकाङ्क्षेति स्फुटम् ॥

ಆಕಾಂಕ್ಷಾಲಕ್ಷಣಸಮನ್ವಯವು ಹೀಗಿದೆ. 'ಗಾಮಾನಯ ' ಎಂಬಲ್ಲಿ ಕಾರಕಪದತ್ವಾವಚ್ಛಿನ್ನವಾದ ಗೋಪದದಿಂದ ಪ್ರಯೋಜ್ಯವಾದದ್ದು ಜಿಜ್ಞಾಸಾ. ಕ್ರಿಯಾನ್ವಯಜ್ಞಾನೇಚ್ಛಾ ಎಂದರ್ಥ. ಅದಕ್ಕೆ ವಿಷಯವಾದದ್ದು ಯೋಗ್ಯಕ್ರಿಯಾನ್ವಯಜ್ಞಾನ. ಅದಕ್ಕೆ ವಿಷಯವಾದದ್ದು ಕ್ರಿಯೆಯ ಅನ್ವಯ. ಈ ಅನ್ವಯಕ್ಕೆ ಕ್ರಿಯಾಕಾರಕಗಳ ಆಕಾಂಕ್ಷೆಯು ಪ್ರತಿಯೋಗಿಯಾಗಿದೆ ಎಂದು ಅಭಿಮತವಾಗಿದೆ. ಇಂತಹ ಜ್ಞಾನಜನಕತಾವಚ್ಛೇದಕರೂಪವಾದದದ್ದು ಕ್ರಿಯಾಪದತ್ವಾದಿಗಳು.ಇವುಗಳು ಪದದಲ್ಲಿರುವ ಆಕಾಂಕ್ಷಾ ಎಂದು ಸ್ಪಷ್ಟವಾಗಿದೆ ಎಂದರ್ಥ.

विट्ठलभट्टीयम् - किञ्चाकाङ्क्षा तु स्वरूपतोऽशाब्दबोधहेतुः । सत्यामप्याकाङ्क्षायां तदज्ञाने शाब्दबोधादृष्टेः । असत्यामाकाङ्क्षायां तज्ज्ञानाच्छाब्दबोधोदयात् । किन्तु तज्ज्ञानत्वेन कारणता वाच्या । तथा चोक्ताकाङ्क्षाया अनुपस्थितावपि शक्तिज्ञानवतां समभिव्याहारज्ञानमात्रेण शाब्दबोधस्यानुभवसिद्धत्वेनोक्ताकाङ्क्षाज्ञानस्य हेतुत्वं न सम्भवत्येव । न हि सर्वत्रेच्छा-व्युत्पत्तिस्तज्ज्ञानं वा प्रामाणिकम् । तस्यैव समभिव्याहारस्याकाङ्क्षात्वात् । तथा च तत्पदोत्तरतत्पदत्वमेवाकाङ्क्षा न जिज्ञासेति चेत् । मैवम् । शाब्दबोधे वाक्यघटकानां पदानां पूर्वत्वोत्तरत्वादिज्ञानस्योपयोगाभावेन तद्घटितवाक्यरूपसमभिव्याहारज्ञानस्य कारणत्वा-सम्भवात् । एकानुपूर्व्या ज्ञानस्य कारणत्वाङ्गीकारे तद्वाक्यघटकयावत्पदघटिततद्विजातीयानुपूर्वी-ज्ञानादपि तादृशबोधस्यैवोत्पत्त्या व्यभिचारात् । अव्यवहितत्वनिवेशेन व्यभिचारपरिहारे तु गौरवम् ।

न च पर्यायवाचकपदान्तरसमुदायादपि तादृशबोधोत्पत्त्या व्यभिचारेण तादृशोत्पत्तौ तत्तत्पदज्ञानस्यापि कारणत्वाभावप्रसङ्गेन तत्तत्पदज्ञानव्यवहितोत्तरत्वनिवेशस्य भवन्मतेऽ-

प्यावश्यकतया न गौरवमिति वाच्यम् । एकजातीयपदघटितनानानुपूर्वीज्ञानस्य पृथक्करणत्वाकल्पनेन तत्तदानुपूर्व्यवहितत्वनिवेशस्यानावश्यकत्वात् । तत्स्थले तत्तत्पदानां ज्ञानं परस्परान्वयज्ञानसहितं तावत्पदघटितनानानुपूर्वीज्ञानस्थलेऽनुगतमेवेति नाव्यवहितोत्तरत्वनिवेशः । पदज्ञानस्य कारणतायास्तवाप्यावश्यकत्वेन तत्पदाव्यवहितोत्तरत्वनिवेशस्त्वत्पक्षेऽप्यावश्यक एव ।

न च भवदुक्तजिज्ञासोदयाभावेनोक्ताकाङ्क्षाया असार्वत्रिकत्वमिति वाच्यम् । तादृशजिज्ञासातन्निवृत्त्यन्यतरस्वरूपयोग्योपस्थितिजनकतावच्छेदकरूपावच्छिन्नत्वस्याकाङ्क्षारूपत्वात् । गवदिपदेन च सामान्यतोऽन्वयोपस्थितेर्जायमानत्वात् । सामान्यधर्मावच्छिन्नज्ञानस्य विशेषजिज्ञासास्वरूपयोग्यत्वस्य सर्वसम्मतत्वात् । तादृशं च विभक्तित्वनामत्वादिवैजात्यमेव तत्स्वरूपयोग्यतावच्छेदकरूपत्वस्यैवाकाङ्क्षापदार्थत्वात् । न च विभक्तित्वादिकं न जातिः । सत्त्वादिना वर्णव्याप्यजातिना साङ्कर्यात् ।

नाप्यखण्डोपाधिः । व्याकरणान्तरकारेणान्यथासङ्केतस्य कर्तुं शक्यत्वात् । कल्पान्तरे राम इत्यानुपूर्व्या राज्ञ इत्यादाविव षष्ठीविभक्त्यन्तत्वसङ्केतस्यापि कर्तुं शक्यत्वेन ङस इत्यानुपूर्व्याः षष्ठीत्वपञ्चमीत्वादीनां कर्तृसङ्केतानुसारेण सत्त्वेनाव्यवस्थितत्वेनाखण्डोपाधित्वानुपपत्तेः। तथा च सङ्केतत्वमेवेति वाच्यम् । तथा च पाणिन्यादिज्ञानशून्यानां शाब्दानुपपत्तिरिति वाच्यम् । वेदापौरुषेयत्ववादिनामस्माकं विभक्तित्वादीनामनाद्यनन्तकाले एकजातीयत्वेन जातित्वे बाधकाभावात् । साङ्कर्यस्य जातिबाधकत्वे मानाभावात् । अत एव मालात्वादिकं प्रत्यक्ष-बलाज्जातिरेवाखण्डोपाधित्वं वाऽस्तु तावताऽपि बाधकाभावात् । पाणिन्यादयस्तु गुरुमुखाद्व्याकरणादिकं ज्ञात्वैव कृतवन्तः । येनाक्षरसमाम्नायमधिगम्य महेश्वरात्कृत्स्नं व्याकरणं प्रोक्तमित्युक्तेः ।

न च व्याकरणस्याप्यनादित्वप्रसङ्गः । इष्टापत्तेः । सर्वसमयानामपि प्रवाहतोऽ-नादित्वस्याङ्गीकृतत्वात् । आनुपूर्व्या अनादित्वाभावेन वेदाद्वैलक्षण्यस्योपपत्तेः । यद्वा पदानां परस्परान्वितस्वार्थबोधकस्वरूपयोग्यत्वमेवाकाङ्क्षा । तादृशपदानामेवाकाङ्क्षाजनकत्वतन्निवर्तकत्वं सम्भवतीति परस्परं तत्स्वरूपयोग्यत्वं सम्भवति । तज्ज्ञानमेव शाब्दजनकम् । तच्चेदं

पदमेतत्पदार्थान्वितस्वार्थबोधकमित्याकारम् । तथा च पदार्थयोरन्वयस्य तत्प्रतियोगिक-पदार्थान्तरप्रतियोगिकान्वयत्वेन ज्ञातत्वेऽपि स्वरूपतोऽज्ञातत्वान्न शाब्दबोधवैय्यर्थ्यापत्तिः । अत एव सामान्यतोऽन्विताभिधानशक्तिमन्त्यपि पदानि पदान्तरसन्निधानादुक्ताकाङ्क्षाज्ञान-रूपसहकारिसामर्थ्याद्विशेषतोऽन्वयमपि बोधयन्ति । परन्त्वन्वयनिष्ठा विषयताऽन्वयत्व-रूपसामान्यधर्मावच्छिन्ना पदशक्तिप्रयोज्या । अन्वयांशेऽन्वयतावच्छेदकविशेषसंयोगित्वा-दिविषयताऽऽकाङ्क्षा ज्ञानप्रयोज्या ।

न च पदानामेव विशेषान्वयाभिधाने आहितशक्तिमत्त्वोक्तिविरोधः । आकाङ्क्षाज्ञानस्य पदैर्जायमाने बोधे सहकारित्वेन पदेष्वेव तादृशशक्तेराधानात् । करणनिष्ठशक्ति विशेषसम्पादकत्वस्यैव सहकारिरूपत्वात् । आलोकादौ तथा दृष्टत्वात् । अत्र विशेषस्तूत्तरत्र शक्तिविचारे वक्ष्यामः ।

व्युत्पन्नस्य क्रियात्वकारकत्वादिज्ञानेऽप्युक्ताकाङ्क्षाज्ञानादिभावेन शाब्दबोधः । अन्यथेदं क्रियापदं द्वितीयादिविभक्तिमत्पदमिति ज्ञानमात्रवतोऽपि शाब्दबोधापत्तेः । न चेष्टापत्तिः । अनुभवविरोधात् । विपरीतव्युत्पन्नस्य क्रियाकारकत्वाद्यज्ञानेऽप्यन्वयज्ञानमात्रेण शाब्दबोधो-दयात् । न हि प्रमायां तस्यापि पदस्य स्वसमानविभक्तिकसमभिव्याहृतानामन्तरे भेदसम्बन्धेनान्वय इति ज्ञानवतः शाब्दबोधो न जायत इति वक्तुं युक्तम् । अतस्तदर्थान्वितस्वार्थबोधकमिदं पदमित्याकाङ्क्षाज्ञानस्यैव हेतुता । न चैतादृशाकाङ्क्षाज्ञानवतः पुरुषस्याभ्रान्तत्वापत्तिः । नामार्थयोरप्युक्ताकाङ्क्षाज्ञानसाहित्येन भेदसम्बन्धेन बोधकत्वशक्तेः सत्त्वादिति वाच्यम् । स्वाभाविकशक्तिमत्त्वज्ञानस्यैवाकाङ्क्षारूपत्वेन विपरीतव्युत्पत्तिरूपदोषबलात्तादृशबोध-जनकत्वरूपशक्तिमत्त्वेऽपि तादृशशक्तेराहितत्वेनास्वाभाविकत्वेन स्वाभाविकशक्तिमत्त्व-रूपाकाङ्क्षाज्ञानस्य भ्रमत्वात् । न च तच्छक्तेरस्वाभाविकत्वमित्यत्र किं मानमिति वाच्यम् । अनाद्यनन्तकालेषु पुरुषेष्वभेदावगाहिबोधजनकत्वेन तादृशशक्तेः स्वाभाविकत्वे सिद्धे क्वचिदेव काले एकद्वित्रादिपुरुषेषु तादृशबोधजनकत्वस्य वेत्रबीजादौ कदलीकाण्डजननशक्तेरिवा-स्वाभाविकत्वस्यैवोचितत्वात् ।

न च नामार्थयोरनादिकालेऽभेदावगाहि बोधजनकत्वमुत्तरत्रापि तथेत्यत्र किं नियामकमिति वाच्यम् । वेदापौरुषेयत्वस्यैव नियामकत्वात् । न च स्वाभाविकशक्तिमत्त्वस्यैवाकाङ्क्षारूपत्वं कुत इति वाच्यम् । विपरीतव्युत्पत्तिमतोऽन्यथाऽपि बोधं जनयति । ज्ञानवतोऽपि तादृशबोधानुदयेन सामान्यतस्तादृशबोधानुकूलशक्तिमत्त्वस्काङ्क्षारूपत्वासम्भवात् । न चैवं लक्षणया बोधजनकत्वशक्तेरप्याहितत्वेन तदवगाहिज्ञानस्याकाङ्क्षाज्ञानरूपत्वाभावे तत्राकाङ्क्षाज्ञानासम्भवेन बोधो न स्यादिति वाच्यम् ।

लक्षणया पदार्थविषयबोधजननानुकूलशक्तेराधानसत्त्वेऽप्यन्वयबोधस्य लक्षणया कदाऽप्यजननेनान्वयबोधशक्तौ लक्षणाप्रयोज्यत्वासम्भवेन समभिव्याहृतपदार्थसंसर्गनिष्ठसांसर्गिकविषयताकबोधजननानुकूलस्वाविकशक्तिमत्त्वरूपाकाङ्क्षाज्ञानसम्भवेन दोषाभावात् । अत एवापभ्रष्टभाषायां व्यवहारानुसारेण तथैव व्युत्पत्तिरिति ।

नन्वपभ्रष्टभाषायां प्रथमात्वादिविभक्तित्वादिज्ञानशून्यानां शाब्दबोधोदयान्न क्रियात्वकर्मत्वादिज्ञानं शाब्दधीहेतुः । अन्यत्र बोधो क्लृप्तसामग्रीबलादेव संस्कृतेऽपि बोधाङ्गीकारस्योचितत्वादिति चेन्न । परस्परान्वितस्वार्थबोधकत्वज्ञानादेव शाब्दाङ्गीकारपक्षे दोषाभावस्य स्फुटत्वात् । क्रियात्वादिज्ञानस्य कारणतामतेऽप्यानुपूर्व्या भिन्नत्वेऽपि तत्र तदीयसङ्केतादिना क्रियात्वकारकत्वादिवैजात्यानां तत्र सत्त्वात् । तादृशवैजात्यस्य स्वरूपतो ज्ञानमेव वैजात्यप्रयोजकं न तु षष्ठ्यादिपदवाच्यत्वज्ञानमिति दोषाभावात् । सङ्केतयितृज्ञानाभावेऽपि क्रियात्वादिज्ञानमात्रेणैव शाब्दोत्पत्तेः सम्भवात् ॥

* * * * * *

# ॥ ಅಥ ಪ್ರಮಾಣಪದ್ಧತ್ಯಾಂ ಸನ್ನಿಧಿನಿರೂಪಣಮ್ ॥

## ಪ್ರಮಾಣಪದ್ಧತಿಯಲ್ಲಿ ಹೇಳಿದ ಸನ್ನಿಧಿಲಕ್ಷಣ ಯಾವುದು ?

सन्निधिलक्षणम्,

प्रमाणपद्धतिः — **सन्निधिः[१] अविलम्बेनोच्चरितत्वं पदधर्म एव ।**

ವಿಲಂಬವಿಲ್ಲದೇ ಉಚ್ಚಾರಣೆ ಮಾಡುವುದನ್ನು ಸನ್ನಿಧಿ ಎಂದು ಕರೆಯಲಾಗುತ್ತದೆ. ಇದೂ ಸಹ ಪದದ ಧರ್ಮವೇ ಆಗಿದೆ.

(१) सन्निधिरिति ।। उच्चरितमिति । उपलक्षणमेतत् । लिखितत्वादिकमपि ग्राह्यम् । तज्ज्ञानाधिकरणकालवृत्तिज्ञानोत्पत्तिप्रयोजकवक्तृव्यापारविषयत्व-मित्यर्थः । तथा च मौनिश्लोकादावपि सम्भवति । न च व्यवहितपदानामपि योजनयाऽन्वयबोधस्यानुभवसिद्धत्वात्कथं सन्निधेः शाब्दहेतुत्वम् । यदि च तात्पर्यरूपवक्तृव्यापारमादाय सन्निधिरानीयते तदा गिरिर्भुक्तम् अग्निमान् देवदत्तेनेत्यादिवाक्यानामपि सन्निधिसत्त्वापत्तिः । तथा चासत्तिरहितवाक्यस्यैव दुर्मिलत्वापत्तिरिति वाच्यम् । प्रहरे प्रहरे उच्चरितस्य गामानयेत्यादिवाक्यस्यैव सुमिलत्वात् । गिरिर्भुक्तमित्यादिवाक्ये यदि तात्पर्यज्ञापकं किञ्चिदस्ति तदा सन्निधिमत्त्वे इष्टापत्तिः । तदभावे ज्ञायमानव्यापारत्वस्यैव सन्निधित्वेन तद-भावात् । अत एवोच्चारणस्याज्ञानेऽविलम्बेनोच्चारितेऽति सन्निधिर्नाङ्गीक्रियते । वस्तुतस्तु पदयोः सन्निधिरेकक्षणवृत्तित्वज्ञानमेव तत्प्रयोजकत्वाद्व्यापारोऽपि सन्निधिरित्युच्यते ।

केचित्तु स्वसमानाधिकरणज्ञानादिदोषाननुमापकं यत्पदयोर्व्यवधानं तदप्रयोजक-वक्तृव्यापारविषयत्वं सन्निधिः । इत्थं च गिरिर्भुक्तमित्यादौ यदि किञ्चित्-प्रयोजनोद्देशेन व्यवधानं तदा सन्निधिरस्त्येव । यदि न प्रयोजनोद्देशस्तदा

तद्व्यवधानप्रयोजकव्यापारस्य वक्तृव्यापारदोषानुमापकत्वान्न सन्निधिरिति वदन्ति । न चाध्याहारस्थले वाक्यत्वानुपपत्तिः । अध्याहृतपदसन्निधेरभावादिति वाच्यम् । तत्राप्यध्याहारज्ञापकस्य कर्तृव्यापारस्य सत्त्वात् । तदभावे न्यूनत्वेन वाक्याभासत्वात् ।

ननु सन्निधेर्वाक्याङ्गत्वं कस्मादङ्गीकर्तव्यम् । सत्यपि व्यवधाने सन्निधे-रुक्तरीत्या सम्पादयिष्यमाणत्वात् । न च सन्निध्यभावेऽसन्निहितपदज्ञाना-सम्भवेन शाब्दानुपपत्तिरिति वाच्यम् । असन्निहित-पदस्याप्याकाङ्क्षानुसारेण स्मरणसम्भवादिति चेन्न । उपादेयत्वघटितप्रामाण्यस्य सन्निध्यभावेऽनु-पपत्तेः । विना प्रयोजनं तत्पदोच्चारणाद्यभावे तत्पदस्य वाऽन्यस्य वाऽध्याहारस्तन्त्रादिकं वेत्यत्र नियामकाभावेन तात्पर्यानिश्चयेन बोधानुपपत्तेः । कथञ्चितात्पर्यज्ञान-सम्भवेऽपि पदबोधनार्थे वाक्ये स्फुटप्रतीतिविरोधिव्यवधानस्य प्रयोजनानु-सन्धानादिप्रयोजकाप्रयोज्यस्य कर्तुर्मौर्ख्यादिमात्रप्रयोज्यत्वे सिद्धे तन्मूलकत्व-सन्देहेन वाक्यप्रामाण्यसन्देहाच्छुकादि वाक्यवदनुपादेयत्वाच्च । चोलदेशस्थितस्य पिपासोः सुरसरिति शीतलानि जलानि सन्तीत्यादिवाक्यव्यावर्तनाय सन्निहिता-र्थाभिधायकत्वमपि विशेषणं देयम् । अन्यत्रोक्तत्वात् । अथवा शाब्दबोधोप-योगिसन्निधिरत्राभिहितः । तदुपयोगित्वं च प्रदर्शितमेव । तत्रोपादेयत्वप्रयोजक-सन्निधिरभिहित इत्यास्तां विस्तरः ।

विजयीन्द्रतीर्थीयम्.— सन्निधिरिति । निष्फलान्वयबोधविरोधिव्यवधानाभाववद्वक्तृ-व्यापारविषयत्वमित्यर्थः । व्यापारश्चाभिप्रायोऽप्युच्चारणं वा तद्विषयत्वं वा तत्र तत्रास्त्येव ।

ಸನ್ನಿಧಿ ಶಬ್ದದ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ. ನಿಷ್ಫಲವಾದ ಅನ್ವಯಬೋಧಕ್ಕೆ ವಿರೋಧಿಯಾದ ವ್ಯವಧಾನ ಇಲ್ಲದೇ ಮಾತನಾಡುವವನ ವ್ಯಾಪಾರಕ್ಕೆ ವಿಷಯವಾದದ್ದು ಎಂದರ್ಥ. ವ್ಯಾಪಾರ ಎಂದರೆ ವಕ್ತೃವಿನ ಅಭಿಪ್ರಾಯ. ಅಥವಾ ಉಚ್ಚಾರಣೆ ಅಥವಾ ಉಚ್ಚಾರಣವಿಷಯತ್ವ ಎಂದರ್ಥ. ಇವುಗಳು ಮೌನಿ-ಶ್ಲೋಕದಲ್ಲಿ ಇದ್ದೇ ಇದೆ ಎಂದಭಿಪ್ರಾಯ.

**विजयीन्द्रतीर्थीयम्**.—एवं च गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ व्यवधानेऽप्यन्वयबोधविरोधिव्यवधानाभावः । ज्योतिष्टोमप्रकरणगतद्वादशाहीनस्येत्यादेर्द्वादशोपसक्तत्व प्रतिपाद द्वादशाहविधिना सहासत्तिरस्त्येव व्यवधानेऽपि यस्य निष्फलत्वाभावात् । तेनैव क्रमेण पाठस्य दृष्टार्थतया निष्फलत्वाभावादिति द्रष्टव्यम् ।।

ಹೀಗೆ 'ಗಿರಿಃ ಭುಕ್ತಂ ಅಗ್ನಿಮಾನ್ ದೇವದತ್ತೇನ' ಮುಂತಾದ ಸ್ಥಳಗಳಲ್ಲಿ ವ್ಯವಧಾನವಿದ್ದರೂ ಅನ್ವಯಬೋಧವಿರೋಧಿಯಾದ ವ್ಯವಧಾನ ಇಲ್ಲ ಎಂದಭಿಪ್ರಾಯ. ಜ್ಯೋತಿಷ್ಟೋಮಪ್ರಕರಣದಲ್ಲಿ ರುವ 'ದ್ವಾದಶಹೀನಸ್ಯ' ಮುಂತಾದ ವಾಕ್ಯಗಳಿಗೆ ದ್ವಾದಶಉಪಸಕ್ತತ್ವವನ್ನು ಪ್ರತಿಪಾದನೆ ಮಾಡುವ ದ್ವಾದಶಾಹವಿಧಿಯಲ್ಲಿ ಸಂಬಂಧವು ಇರುವುದರಿಂದ ವ್ಯವಧಾನವಿದ್ದರೂ ಸಹ ಆ ವ್ಯವಧಾನವು ನಿಷ್ಫಲವಲ್ಲವಾದ್ದರಿಂದ ಆಸತ್ತಿಯು ಇದೆ ಎಂದಭಿಪ್ರಾಯ. ಹೀಗೆ ವ್ಯವಧಾನವಿರುವ ಕ್ರಮದಿಂದಲೇ ಅಧ್ಯಾಪಕರ ಪಾಠಕ್ರಮವು ಕಂಡಿದೆ ಹಾಗೂ ಅದರ ಫಲ ಕಂಡಿದೆಯಾದ್ದರಿಂದ ನಿಷ್ಫಲತ್ವವು ಇಲ್ಲ ಎಂದು ತಿಳಿಯಬೇಕು.

।। इति प्रमाणपद्धत्याम् आगमपरिच्छेदः ।।

# ॥ ಅಥ ಪ್ರಮಾಣಪದ್ಧತ್ಯಾಂ ಯೋಗ್ಯತಾನಿರೂಪಣಮ್ ॥

## योग्यतालक्षणम्,

### ಪ್ರಮಾಣಪದ್ಧತಿಯಲ್ಲಿ ಹೇಳಿದ ಯೋಗ್ಯತಾಲಕ್ಷಣವೇನು ?

प्रमाणपद्धतिः— प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यता पदार्थधर्मः[१]। तद्वाचकत्वात्पदान्यपि योग्यतावन्तीत्युच्यन्ते । तत्र पदत्वेन निरभिधेयत्वस्य, आकाङ्क्षासन्निधिभ्यामन्वयाभावस्य, योग्यतया विपरीतबोधकत्वस्य च निरासे सत्यशेषदोषनिरासार्थं निर्दोषग्रहणम् ।

ಪ್ರತೀತವಾದ ಅನ್ವಯಕ್ಕೆ ಪ್ರಮಾಣವಿರೋಧವಿಲ್ಲದೇ ಇರುವಿಕೆಯು ಯೋಗ್ಯತಾ ಎಂದು ಕರೆಸಿಕೊಳ್ಳುತ್ತದೆ. ಇದು ಪದದ ಧರ್ಮ. ಯೋಗ್ಯತಾವಾಚಕವಾದ್ದರಿಂದ ಪದಗಳೂ ಸಹ ಯೋಗ್ಯತಾವುಳ್ಳವುಗಳು ಎಂದು ಕರೆಸಿಕೊಳ್ಳುತ್ತವೆ. ಆಗಮಲಕ್ಷಣದಲ್ಲಿ ಪದ ಎಂಬ ಶಬ್ದದಿಂದ ನಿರಭಿಧೇಯತ್ವವನ್ನು, ಆಕಾಂಕ್ಷಾ ಸನ್ನಿಧಿಗಳಿಂದ ಅನ್ವಯಾಭಾವವನ್ನು, ಯೋಗ್ಯತಾದಿಂದ ವಿಪರೀತ-ಬೋಧಕತ್ವ ದೋಷವನ್ನೂ ನಿರಾಸಮಾಡಲಾಗಿದೆ.ಹಾಗೂ ಎಲ್ಲ ದೋಷಗಳನ್ನು ನಿರಾಸ ಮಾಡಲು ನಿರ್ದೋಷ ಎಂಬ ಶಬ್ದವನ್ನು ಹೇಳಲಾಗಿದೆ.

(१) प्रतीतावन्वयप्रमाणविरोधोऽयोग्यतेति । अत्रेदं बोध्यम् । योग्यताज्ञानं न शाब्दबोधधीहेतुः । मानाभावात् । न च बाधकालेऽपि शाब्दबोधापत्तिः । सत्त्वावगाहिबोधानङ्गीकारादिति वाच्यम् । अयोग्यताज्ञानस्य प्रतिबन्धकत्वादेव शाब्दबोधानुदयात् । न च योग्यताज्ञानस्य कारणत्वम् । अयोग्यताज्ञानस्य प्रतिबन्धकत्वं वेत्यत्र विनिगमनाविरह इति वाच्यम् । प्रत्यक्षादिस्थले तद्वत्ताबुद्धिं प्रति तदभावात्तन्निर्णयस्य प्रतिबन्धकतायाः क्लृप्तत्वात् । सत्यपि योग्यताज्ञाने लौकिकसन्निकर्षादिना बाधबुद्ध्युत्पत्तौ तृतीयक्षणे शाब्दबोधापत्तेः । समूहालम्बनात्मिकाया योग्यताज्ञानादिघटितायाः शाब्दसामग्र्याः सत्त्वात् । एवमपूर्वार्थविषयकस्य संशयात्मकस्यापि ज्ञानस्य पूर्वमसत्त्वात्किन्तु सन्निधिरिव वाक्यांशभूतेति ।।

**विजयीन्द्रीयम्**— प्रतीतान्वयस्येति । प्रमाणाबाधित एकान्वयप्रतियोगिन्य-परान्वयप्रतियोगिसंसर्ग एव योग्यतेत्यर्थः । एवञ्च निर्दोषपदं निरभिधेयत्वादि-व्यतिरिक्ताभावपरमित्याह ।। तत्र पदत्वेनेति ।

ಪ್ರಮಾಣಬಾಧಿತಸ್ಯ ಎಂಬ ಟೀಕಾವಾಕ್ಯದ ಅಭಿಪ್ರಾಯ ಹೀಗೆ. ' ಪ್ರಮಾಣಬಾಧವಿಲ್ಲದ ವಾಕ್ಯದಲ್ಲಿ ಏಕಾನ್ವಯ ಬರಲು ಅನ್ವಯಪ್ರತಿಯೋಗಿಯಾದ ಶಬ್ದಕ್ಕೆ ಮತ್ತೊಂದು ಶಬ್ದದ ಯೋಗ್ಯವಾದ ಅನ್ವಯದ ಸಂಬಂಧವೇ ಯೋಗ್ಯತಾ' ಎಂದರ್ಥ. ಇದರಂತೆಯೇ ನಿರ್ದೋಷಪದವು ನಿರಭಿಧೇಯ-ತ್ವಾದಿವ್ಯತಿರಿಕ್ತವಾದ ಅಭಾವಪರವಾಗಿದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ತತ್ರ ಪದತ್ವೇನ ಎಂಬ ವಾಕ್ಯ ಪ್ರವೃತ್ತವಾಗಿದೆ.

राघवेन्द्रीयम्— वाक्यशरीरप्रविष्टविशेषणानां कृत्यान्याह ।। तत्रेति । वाक्यलक्षण इत्यर्थः ।। पदत्वेनेति । पदानामिति विशेषणोक्त्येत्यर्थः । सुप्तिङ्रूपविभक्त्यन्तत्वस्य ङ्याप्प्रातिपदिकादिति प्रातिपदिकाधीनत्वात् । प्रातिपदिकसंज्ञायाश्चार्थवदधातुरप्रत्ययः प्रातिपदिकमित्यर्थवत एव विधानात्तेन तन्निरास इति भावः ।। अशेषेति । ज्ञातज्ञापकत्वादिप्रागुक्ताशेषदोषेत्यर्थः ।

ವಾಕ್ಯಲಕ್ಷಣದಲ್ಲಿ ಇರುವ ವಿಶೇಷಣಗಳಿಗೆ ದಲಕೃತ್ಯವನ್ನು ಹೇಳಲು 'ತತ್ರ 'ಎಂಬ ವಾಕ್ಯ ಹೊರಟಿದೆ. ವಾಕ್ಯದಲ್ಲಿ ಎಂದರ್ಥ. ಪದಗಳಿಗೆ ವಿಶೇಷಣವನ್ನು ಹೇಳಿದ್ದರಿಂದ ಎಂದು ' ಪದತ್ವೇನ' ಎಂಬುದರ ಅರ್ಥ. ಸುಪ್ ತಿಙ್ ರೂಪವಾದ ಪ್ರತ್ಯಯಾಂತವಾದ ಪದಗಳಿಗೆ ಪ್ರಾತಿಪದಿಕಸಂಜ್ಞೆಯು 'ಙ್ಯಾಪ್ ಪ್ರಾತಿಪದಿಕಾತ್' ಎಂಬ ಸೂತ್ರಾನುಸಾರವಾಗಿ ಬರುತ್ತದೆ. ಅರ್ಥವಿರುವ, ಧಾತುವಲ್ಲದ, ಪದಗಳಿಗೇ ಪ್ರಾತಿಪದಿಕ ಸಂಜ್ಞೆಯನ್ನು 'ಅರ್ಥವದಧಾತುರಪ್ರತ್ಯಯಃ ಪ್ರಾತಿಪದಿಕಮ್' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ವಿಧಾನ ಮಾಡಲಾಗಿದೆ. ಆದ್ದರಿಂದ ಪದಶಬ್ದಕ್ಕೆ ವಿಶೇಷಣವನ್ನು ನೀಡಿದ್ದರಿಂದ ಕೇವಲ ಅಕ್ಷರಗಳಿಗೆ ಪ್ರಾತಿಪದಿಕತ್ವವನ್ನು ನಿರಾಸ ಮಾಡಿದಂತಾಯಿತು ಎಂದಭಿಪ್ರಾಯ. ಜ್ಞಾತಜ್ಞಾಪಕತ್ವ ಮುಂತಾದ ಹಿಂದೆ ಹೇಳಿದಎಲ್ಲ ದೋಷಗಳು ಎಂದು 'ಅಶೇಷ 'ಶಬ್ದದ ಅಭಿಪ್ರಾಯ.

विट्ठलभट्टीयम्- योग्यतालक्षणमाह ।। प्रतीतान्वयस्येति । पदसमूहरूपशब्दप्रतीतपदार्थानामन्वयस्येत्यर्थः । सन्निधिवदियं योग्यता पदधर्म इति प्रतीति निरासायाह ।। पदार्थधर्म इति । प्रमाणविरुद्धान्वयप्रतियोग्यतापदार्थगतानां योग्यतेत्याशयः । कथं तर्हि पदानि योग्यतावन्तीत्यत आह ।। यद्वाचकत्वादिति । प्रमाणविरुद्धान्वयप्रतियोगिबोधकत्वा-दित्यर्थः । परम्परासम्बन्धेन योग्यतासम्बन्धित्वात्पदानि योग्यतावन्तीत्यर्थः । यद्वा पदानां योग्यता नाम केति जिज्ञासायां योग्यतावदर्थप्रतिपादकत्वं योग्यतेत्यभिप्रेत्य योग्यताशरीरप्रविष्टार्थधर्मभूतयोग्यतां तावदाह ।। प्रतीतान्वयस्येति । अर्थधर्मो योग्यतेत्यन्वयः । पदगतयोग्यतामाह ।। तद्वाचकत्वात्पदान्यपीति । प्रमाणाविरुद्धान्वयप्रतियोग्यभिधायकत्वं पदगतयोग्यतेति भावः । प्रमाणलक्षटीकायां त्वन्योन्यान्वययोग्यतावदर्थभिधायकत्वं योग्यत्वमित्युक्तम् । अन्योन्यान्वयोऽन्योन्यनिरूपितान्वय इति यावत् । तस्य योग्यता प्रमाणाविरोध इति भावः ।

तदर्थप्रतिपादकत्वं पदानां योग्यत्वं योग्यतेत्यर्थः । तथाऽत्रापि प्रमाणविरुद्धान्वय-प्रतियोग्यार्थाभिधायकत्वं योग्यतेत्युक्तत्वान्न विरोधशङ्कावकाश इति । आगमलक्षणवाक्ये पदकृत्यमाह – तत्रेति । द्वितीयागमलक्षणवाक्य इत्यर्थः ।। पदत्वेनेति । पदस्य वाचकत्वात्पदत्वेन निरभिधेयत्वस्य निरास इति भावः ।। योग्यतयेति । योग्यतायाः सदर्थबोधकत्वनियतत्वात् । योग्यतया विपरीतबोधकत्वनिरास इति भावः ।

## ಪ್ರಮಾಣಪದ್ಧತಿಯಲ್ಲಿ ಪದಗಳಿಂದ ಅರ್ಥಜ್ಞಾನ ಬರುವ ಕ್ರಮವನ್ನು ಹೇಗೆ ಹೇಳಿದ್ದಾರೆ?

प्रमाणपद्धतिः — [१]**पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितं वाच्य-वाचकभावसम्बन्धग्रहणसंस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्र-मनेकेष्वपि वर्णेष्वेकां पदबुद्धिं जनयति । तथा पूर्वपूर्वपदानुभवजनितसंस्कारसहकृतमन्त्यपद-विषयं श्रोत्रमनेकेषु पदेष्वेकां वाक्यबुद्धिमाकाङ्क्षाद्यनुसारेण**[२] **जनयति । तेन वर्णानां पदानां च सहानवस्थितप्रतीतीनामपि समुदायो युज्यते ।**

'ಹಿಂದೆ ಹಿಂದೆ ಕೇಳಿದ ವರ್ಣಗಳ ಅನುಭವದಿಂದ ಉಂಟಾದ ಸಂಸ್ಕಾರ ಹಾಗೂ ಪದ-ಗಳಿಗಿರುವ ವಾಚ್ಯ-ವಾಚಕಭಾವ ಸಂಬಂಧವನ್ನು ಗ್ರಹಣ ಮಾಡುವ ಸಂಸ್ಕಾರಗಳಿಂದ ಸಹಿತವಾದ ಶ್ರೋತ್ರೇಂದ್ರಿಯವು ಅನೇಕ ವರ್ಣಗಳನ್ನು ಕೇಳಿದಾಗ ಅವುಗಳಲ್ಲಿ ಒಂದು ಶಬ್ದದ ಬುದ್ಧಿಯನ್ನು ಹುಟ್ಟಿಸುತ್ತದೆ. ಅದರಂತೆ ಹಿಂದು ಹಿಂದಿನ ಪದಾನುಭವದಿಂದ ಹುಟ್ಟಿದ ಸಂಸ್ಕಾರದ ಸಹಾಕಾರ-ವಿರುವ ಕಡೆಗೆ ಕೇಳಿದ ಪದವನ್ನು ವಿಷಯೀಕರಿಸುವ ಶ್ರೋತ್ರೇಂದ್ರಿಯವು ಅನೇಕಪದಗಳಲ್ಲಿ ಇವುಗಳು ಒಂದು ವಾಕ್ಯ ಎಂಬ ಬುದ್ಧಿಯನ್ನೂ ಹುಟ್ಟಿಸುತ್ತದೆ. ಇದರಿಂದ ವರ್ಣಗಳು ಹಾಗೂ

ಪದಗಳು ಒಟ್ಟಿಗೇ ಇಲ್ಲದಿದ್ದರೂ ಅವುಗಳ ಸಮುದಾಯಜ್ಞಾನವು ಬರುತ್ತದೆ. ಇದರಿಂದ ಪದಾರ್ಥೋಪಸ್ಥಿತಿಯು ಬರುತ್ತದೆ' ಎಂದಭಿಪ್ರಾಯ.

(१) वि– ननु वर्णानां समूहमन्तरेण पदत्वायोगात् वर्णानां पदानां च समूहेन भाव्यम् । न च वर्णानां समूहः सम्भवति । न चैकदेशस्था वर्णाः समूह इति सम्भवति । वर्णानां विभुत्वाद्भिन्नदेशस्थ-वर्णाभावेन व्यावृत्त्यसिद्धेः । नाप्येककालस्थवर्णाः समूह इति सम्भवति । वर्णानां नित्यतयैकपद-व्यावृत्त्यभावात् । नाप्येकप्रतीतिस्था वर्णा वर्णसमूह इति सम्भवति । उत्तरवर्णप्रतीतिकाले पूर्ववर्णप्रतीत्यभावे नानेकवर्णानामेकप्रतीतिविषयत्वासम्भवात् । वर्णसमूहासम्भवादेव वर्णसमूहरूपपदसमूहस्य सुतरामसम्भवात्पदसमूहो वाक्यमित्ययुक्तमित्यत आह ।। पूर्ववर्णानुभवेति । यद्यपि वर्णानां विभुत्वान्नित्यत्वाच्च देशकालापेक्षया पूर्वत्वमन्तिमत्त्वं चायुक्तमेवं वर्णात्मकपदानामप्ययुक्तम् । तथाऽपि यद्वर्णे प्रतीत्यनुकूलोच्चारणादिरूपव्यापारः प्राथमिकः स पूर्वो वर्णो यद्वर्णप्रतीत्यनुकूल उच्चारणादि-व्यापारोऽन्तिमः स चान्तिमो वर्ण इति वर्णानां पूर्वत्वमन्तिमत्वमेवं पदानामपीति ज्ञेयम् । पूर्ववर्णानुभवजनितेत्यत्र वर्णपदेन पदमप्युपलक्ष्यते । अन्तिमपदविषयत्वमित्यत्र पदमित्यनेन वर्णोऽप्युपलक्ष्यते । अनेकेषु पदेष्वित्यत्र पदपदं वर्णस्याप्युपलक्षकम् । तथा वाक्यबुद्धिमित्यत्र वाक्यपदं पदस्याप्युपलक्षकमिति ज्ञेयम् ।

(२) ननु पदवाक्यजिज्ञासारहितस्योक्तरूपमपि श्रोत्रमनेकेषु वर्णेषु पदेषु च पदं वाक्यमिति बुद्धिं जनयतीति कथमेवमुक्तिरित्यत आह ।। आकाङ्क्षाद्यनुसारेणेति । पदवाक्यजिज्ञासानुसारेणेत्यर्थः ।। तेनेति । वर्णानां पदानां च समूहालम्बन-रूपैकबुद्धिविषयत्वेन युगपदवस्थानरहितप्रतीतिविषयाणामपि वर्णानां पदानां च समुदायं समूहो युज्यत इत्यर्थः ।

**राघवेन्द्रीयम्**– ननु व्याप्तानां वर्णानां कथं मेलनेन पदत्वम् । पदानां वा कथं समूही-करणमित्यत आह ।। पूर्वपूर्वेति । अर्थवत्त्वज्ञानं विनेदं पदमित्यनुत्पत्तेरर्थवत्त्वज्ञानायोक्तं वाच्यवाचकेत्यादि विशेषणम् । तेन कचटतपेत्यादावुक्तसामग्रीसत्त्वेऽपि पदत्वबुद्धेरभावाद् व्यभिचार इति निरस्तम् । तत्र सङ्केतग्रहणसंस्कारानुग्रहाभावादिति ।

ವರ್ಣಗಳು ವ್ಯಾಪ್ತವಾಗಿವೆ. ಇವುಗಳು ಹೇಗೆ ಒಂದೆಡೆ ಸೇರಿ ಪದಗಳಾಗಲು ಸಾಧ್ಯ ? ಅಥವಾ ಪದಗಳೂ ಒಂದೆಡೆ ಸೇರಿಕೊಂಡು ಹೇಗೆ ಪದಸಮೂಹಾತ್ಮಕವಾದ ವಾಕ್ಯವಾಗಲು ಸಾಧ್ಯ ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರವಾಗಿ ಪೂರ್ವಪೂರ್ವ ಎಂಬ ವಾಕ್ಯವು ಹೊರಟಿದೆ. ಪದಗಳಿಗೆ ಅರ್ಥವಿಲ್ಲದೇ ಇದ್ದಲ್ಲಿ ಅದನ್ನು ಪದ ಎಂದು ವ್ಯವಹಾರ ಮಾಡುವುದಿಲ್ಲವಾದ್ದರಿಂದ ಅರ್ಥವತ್ವಜ್ಞಾನಕ್ಕೋಸ್ಕರ ವಾಚ್ಯ-ವಾಚಕ ಮುಂತಾದ ವಿಶೇಷಣವನ್ನು ಕೊಡಲಾಗಿದೆ. ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ ಕ,ಚ,ಟ,ತ,ಪ ಮುಂತಾದ ಸ್ಥಳಗಳಲ್ಲಿ ಹಿಂದೆ ಹೇಳಿದ ಸಾಮಗ್ರಿಗಳಿದ್ದರೂ ಅವುಗಳು ವರ್ಣಗಳಾಗಿದ್ದರೂ ಅರ್ಥವು ಇಲ್ಲದೇ ಇರುವುದರಿಂದ ಅಲ್ಲಿ ಪದತ್ವಬುದ್ಧಿಯು ಬರುವುದಿಲ್ಲ ಎಂಬುದಾಗಿ ವ್ಯಭಿಚಾರದೋಷವನ್ನು ಪರಿಹರಿಸಿದಂತಾಯಿತು. ಕ,ಚ,ಟ,ತ,ಪ ಮುಂತಾದ ಸ್ಥಲಗಳಲ್ಲಿ ಸಂಕೇತವನ್ನು ಗ್ರಹಣ ಮಾಡುವ ಸಂಸ್ಕಾರದ ಅನುಗ್ರಹವು ಇಲ್ಲ ಎಂದಭಿಪ್ರಾಯ.

**राघवेन्द्रीयम्—** एवमनाकाङ्क्षादिपदकदम्बे पूर्वपदेत्यादिनोक्तकारणकलापे सत्यपि न वाक्यत्वबुद्धिरिति चोद्यनिरासायाकाङ्क्षाद्यनुसारेणेत्युक्तम् । एवमेकबुद्धिविषयतोपपादनेन फलितमाह ।। तेनेति । एकबुद्धिविषयतोपपादनेनेत्यर्थः । सहानवस्थितप्रतीतीनामिति बहुव्रीहिः । क्रमेणोत्पन्नप्रतीतिविषयाणामित्यर्थः ।

ಇದರಂತೆ ಆಕಾಂಕ್ಷಾರಹಿತವಾದ ಪದಸಮೂಹವಿರುವ ಸ್ಥಲದಲ್ಲೂ ಸಹ ಹಿಂದೆ ಕೇಳಿದ ಪದಗಳ ಸಂಸ್ಕಾರವಿದ್ದರೂ ಸಹ ಅಲ್ಲಿ ವಾಕ್ಯತ್ವಬುದ್ಧಿಯನ್ನು ನಿರಾಸ ಮಾಡುವುದಕ್ಕೋಸ್ಕರ ಆಕಾಂಕ್ಷಾನುಸಾರವಾಗಿ ಪದತ್ವಬುದ್ಧಿ ಬಂದಿರಬೇಕು ಎಂದು ಹೇಳಲಾಗಿದೆ. ಇದರಂತೆಯೇ ಏಕಬುದ್ಧಿವಿಷಯತ್ವವನ್ನು ಉಪಪಾದನೆ ಮಾಡುವುದಕ್ಕೋಸ್ಕರ ತೇನ ಎಂಬ ವಾಕ್ಯ ಹೊರಟಿದೆ. ಏಕಬುದ್ಧಿವಿಷಯತ್ವವನ್ನು ಉಪಪಾದನೆ ಮಾಡಿದ್ದರಿಂದ ಎಂದಭಿಪ್ರಾಯ. ಸಹಾನವಸ್ಥಿತಾನಾಮ್ ಎಂಬಲ್ಲಿ ಬಹುವ್ರೀಹಿ ಸಮಾಸವು ಅಭಿಪ್ರೇತವಾಗಿದೆ. ಕ್ರಮೇಣ ಉತ್ಪನ್ನವಾಗಿವೆ ಎಂಬ ಪ್ರತೀತಿಗೆ ವಿಷಯವಾದ ವರ್ಣಗಳಿಗೆ, ಪದಗಳಿಗೆ ಎಂದಭಿಪ್ರಾಯ.

विजयीन्द्रीयम्— ननु क्रमिकवर्णसमूहरूपपदस्यैवासम्भवेन पदसमूहोऽसम्भावित एवेत्यत आह ।। पूर्वपूर्ववर्णेति । शक्तत्वरूपपदज्ञानोपयोगितया वाच्यवाचकेत्याद्युक्तम् । एवमाकाङ्क्षेत्यादि वाक्यत्वज्ञानोपयोगितयेत्युक्तम् ।

ಕ್ರಮಿಕವಾದ ವರ್ಣ ಸಮೂಹರೂಪವಾದ ಪದವೇ ಇರಲು ಸಾಧ್ಯವಿಲ್ಲವಾದ್ದರಿಂದ ಪದಸಮೂಹವು ಅಸಂಭಾವಿತ ಎಂಬ ಶಂಕೆಗೆ ಉತ್ತರವಾಗಿ ಪೂರ್ವಪೂರ್ವವರ್ಣ ಎಂಬ ವಾಕ್ಯವು ಹೊರಟಿದೆ. ಪದಗಳು ಅರ್ಥವನ್ನು ಹೇಳುವ ಸಾಮರ್ಥ್ಯವನ್ನು ಹೊಂದಿವೆ ಎಂಬ ಪದಶಕ್ತತ್ವಜ್ಞಾನಕ್ಕೆ ಉಪಯೋಗಿಯಾದ ವಿಷಯವನ್ನು ವಾಚ್ಯವಾಚಕಭಾವ ಎಂಬ ಪದದಿಂದ ಹೇಳಲಾಗಿದೆ. ಇದರಂತೆ ಆಕಾಂಕ್ಷಾ ಮುಂತಾದ ಪದಗಳು ವಾಕ್ಯತ್ವಜ್ಞಾನಕ್ಕೆ ಉಪಯೋಗಿತಯಾ ಹೇಳಲಾಗಿದೆ ಎಂದು ತಿಳಿಯಬೇಕು.

आद.— ननु नैकस्य वर्णस्यार्थबोधकत्वम् । इतरवर्णोच्चारणस्य वैय्यर्थ्यापत्तेः । क्रमविशिष्टानां पदानां नैकस्मिन्क्षणेस्थितिः सम्भवति । प्रतिक्षणं नाशात् । वर्णानां नित्यत्वेऽपि क्रमरहितानां बोधकत्वेऽतिप्रसङ्गात् । क्रमविशिष्टानां क्रमप्रयोजकबुद्धिनाशेन नाशात् । तथा च पदस्य वाक्यस्य चैकक्षणे स्थित्यसम्भवात्कथं बोधकत्वम् । अनेकेष्वपि वर्णेष्वेकत्वबुद्धिश्च । न च क्रमविशिष्टवर्णानां नष्टत्वेऽपि तज्ज्ञानस्यैव बोधकत्वमिति वाच्यम् । पदादेकस्माद्वाक्याद्वाऽर्थं स्मरामि प्रत्येमीत्यनुभवव्याकोपदेकत्वादेः सर्वथाऽनुपपत्तेश्च ।

किञ्च ज्ञानाद्बोधाङ्गीकारेऽपि पदं श्रुतं वाक्यं श्रुतमित्यनुभवः पदादिषु वर्तमानत्वावगाह्यनुभवसिद्धः । न च पदेषु वाक्येषु वा वर्तमानत्वं विना घटते । अन्यथा भ्रमत्वापत्तेः । न चैवमन्त्यवर्णस्य वर्तमानत्वमात्रेण प्रामाण्यं घटते । तथा सत्येक-वर्णमात्रप्रत्यक्षानन्तरमपि तथानुभवप्रसङ्गः । न चान्त्यवर्णप्रत्यक्षमेव तदाकारमिति वाच्यम् । तथा सति दोषवशात्तद्घटकवर्णाश्रवणेऽप्यन्त्यवर्णश्रवणमात्रात्तथानुभवप्रसङ्गः । न च यावद्वर्णप्रत्यक्षमेकदा सम्भवति । तदभिव्यञ्जकानां ध्वनानां यौगपद्यसम्भवात् ।

किञ्च पदत्वाश्रये यदि श्रुतत्वमात्रेण तथानुभवः सम्भवति तदैकैकवर्णस्य श्रुतत्वमात्रेण श्रुतमिति धीः स्यात् । एवं स्मृतमित्यपि धीः स्यात् । तद्घटकस्य पूर्वपूर्ववर्णस्य श्रुतत्वात्स्मृत्वाच्च प्रत्यक्षसामग्रीबलादुत्तर वर्णप्रत्यक्षमेव जायते । न पूर्वपूर्ववर्णस्मृतिरिति वाच्यम् । परस्परप्रतिबन्धकत्वे मानाभावात् ।

पश्चादेकाक्षरस्मरणाभावेऽपि पदं स्मृतं वाक्यं स्मृतमित्यनुभवापत्तेः । पदत्वादीनां व्यासज्यवृत्तित्वेन तदवच्छेदेनैव धर्मान्तरस्य भानं न तु तत्सामानाधिकरण्येनेत्युच्यते । तदा पदं

श्रुतं वाक्यं श्रुतमिति प्रत्यक्षानुपपत्तिः । तस्माद्वर्णातिरिक्तं पदवाक्यपदवाच्यं स्फोटाख्यं किञ्चिदङ्गीकर्तव्यम् । तदेव शाब्दधीजनकमिति न वर्णसमुदायस्य पदत्वं तत्समुदायस्य वाक्यत्वं वा युक्तमित्यत आह ।। पूर्वपूर्ववर्णेति । तथा च श्रावणप्रत्यक्षविषयत्वस्य सर्वेषु वर्णेषु सत्त्वाच्छतमित्यनुभवः । आकाङ्क्षादिवशादेकार्थप्रतिपादकत्वरूपोपाधिनैकत्वप्रतीतिः । नानावृक्षेष्वेकस्थानस्थितत्वोपाधिनैकं वनमिति धीवद्वर्तमानत्वमपि किञ्चित्स्थूलकालस्थितत्वमेव प्रतीयते न तु क्षणमात्रवृत्तित्वम् । तथाऽननुभवात् । वर्णसमुदायातिरिक्तस्य स्फोटादेरप्रामाणिकत्वान्नाङ्गीकार्यत्वमिति भावः । संस्काररूपसन्निकर्षबलादतीतानां वर्णानां क्रमस्य च भानं सम्भवतीति भावः । अव्युत्पन्नस्य पदत्वबुद्धेरनुदयात् । वाच्यवाचकभावसम्बन्धग्रहणसंस्कारानुगृहीतमिति । आकाङ्क्षाद्यज्ञाने एकवाक्यत्वबुद्धेरनुदयात् ।।

ಪ್ರಮಾಣಪದ್ಧತಿಯಲ್ಲಿ ಆಕಾಂಕ್ಷಾಯೋಗ್ಯತಾಸನ್ನಿಧಿಪ್ರಕರಣಗಳ
ಅನುವಾದವು ಮುಗಿಯಿತು

* * * * * * *

# ಶ್ರೀಸತ್ಯನಾಥತೀರ್ಥವಿರಚಿತ ಅಭಿನವತಾಂಡವ

## अथ शब्दखण्डः

नमामि नारायणमादिदेवं लक्ष्मीपतिं सर्वगुणैरुदारम् ।
शब्दैकगम्यं समतीतदोषं श्रीमध्वहृत्पद्मगतं मुदेऽहम् ।।

## ಮಂಗಲಾಚರಣೆ

ಲಕ್ಷ್ಮೀಪತಿಯಾದ ಶ್ರೀಮನ್ನಾರಾಯಣನು ಆದಿದೇವನು, ಸರ್ವಗುಣಪರಿಪೂರ್ಣನು, ಕೇವಲ ಆಗಮೈಕವೇದ್ಯನು, ದೋಷರಹಿತನೂ ಆಗಿದ್ದಾನೆ. ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರ ಹೃದಪದ್ಮದಲ್ಲಿರುವ ನಾರಾಯಣನನ್ನು ಮುಕ್ತಿಸುಖಕ್ಕಾಗಿ ನಾನು ನಮಸ್ಕರಿಸುತ್ತೇನೆ.

ವಿವರಣೆ- ಅಭಿನವತಾಂಡವ ಎಂಬ ಈ ಕೃತಿಯು ಶ್ರೀಸತ್ಯನಾಥರು ರಚಿಸಿದ ತರ್ಕತಾಂಡವದ ಸಂಗ್ರಹರೂಪವಾದ ಕೃತಿ. ತರ್ಕತಾಂಡವದಲ್ಲಿದ್ದಂತೆ ಇಲ್ಲೂ ತಾರ್ಕಿಕರ ಅನೇಕಪ್ರಮೇಯಗಳನ್ನು ನಿರಾಕರಣೆ ಮಾಡಲಾಗಿದೆ. ತರ್ಕತಾಂಡವದಲ್ಲಿ ಕಂಠತಃ ಹೇಳಿದ್ದರ ಹಾಗೂ ಸೂಕ್ಷ್ಮವಾಗಿ ಸೂಚಿಸಿದ ವಿಷಯಗಳ ವಿವೇಚನೆ ಮಾಡುವುದರ ಜೊತೆಗೆ ಅನಂತರ ತರ್ಕತಾಂಡವದ ಮೇಲೆ ಬಂದ ಆಕ್ಷೇಪಗಳ ಪರಿಹಾರವನ್ನೂ ಸಹ ಇಲ್ಲಿ ಮಾಡಲಾಗಿದೆ.

ಪ್ರಾರಂಭದಲ್ಲಿ ನಾರಾಯಣ ಹಾಗೂ ಶ್ರೀಕೃಷ್ಣ ಮತ್ತು ತಮ್ಮ ಗುರುಗಳಾದ ಸತ್ಯನಿಧಿತೀರ್ಥರಿಗೆ ನಮಸ್ಕಾರ ಮಾಡಿ ಗ್ರಂಥವನ್ನು ಪ್ರಾರಂಭ ಮಾಡಲಾಗಿದೆ.

शिक्षयन्निव दुस्तर्कसर्पमूर्धनि नर्तनम् ।
यश्चकार श्रये कृष्णं कालिकाङ्गेषु नर्तनम् ।।

ದುಷ್ಟವಾದ ತರ್ಕಗಳೆಂಬ ಸರ್ಪಗಳ ತಲೆಯ ಮೇಲೆ ನರ್ತನ ಮಾಡಬೇಕೆಂದು ಶಿಕ್ಷಣ ನೀಡುವನೋ ಎಂಬಂತೆ ಕಾಲಿಯ ನಾಗನ ಹೆಡೆಗಳ ಮೇಲೆ ನರ್ತನ ಮಾಡಿದ ಶ್ರೀಕೃಷ್ಣನನ್ನು ಆಶ್ರಯಿಸುತ್ತೇನೆ.

**न क्षमा यस्य पुरतः वस्तुं सदसि वादिनः ।**
**अभ्यस्ताखिलविद्याढ्याः श्रये सत्यनिधिं गुरुम् ॥**

ಯಾರ ಎದುರಿಗೆ ಸಭೆಯಲ್ಲಿ ಎಲ್ಲ ವಿದ್ಯೆಗಳನ್ನೂ ಅಭ್ಯಾಸ ಮಾಡಿದ ವಿದ್ವಾಂಸರೂ ಸಹ ಸಮರ್ಥವಾಗಿ ವಾದ ಮಾಡಲು ಅಸಮರ್ಥರೋ ಅಂತಹ ಸತ್ಯನಿಧಿಗುರುಗಳನ್ನು ಆಶ್ರಯಿಸುತ್ತೇನೆ.

## शब्दप्रकरणम्

### ಶಬ್ದದೋಷಗಳ ಸಾಮಾನ್ಯ ಪರಿಚಯ

**अथ शब्दो निरूप्यते । निर्दोषः शब्द आगमः । तस्य दोषाः अबोधकत्वं, विपरीतबोधकत्वं, ज्ञातज्ञापकत्वम्, अनभिप्रेत-प्रयोजनत्वम्, अशक्यसाधनप्रतिपादनं, लघूपाये सति गुरू-पायोपदेशनमित्यादयः ।**

**इयांस्तु विशेषः – अबोधकत्वं विपरीतबोधकत्वं च याथार्थ्य-लक्षणप्रामाण्यविरोधि । अन्यत्तूपादेयलक्षणप्रामाण्यविरोधीति । निर्दोषं वाक्यमिति वा लक्षणम् । वाक्यं चाकाङ्क्षायोग्यता-सन्निधिमतां पदानां समूहः ।**

ಮೊದಲಿಗೆ ಶಬ್ದಲಕ್ಷಣವನ್ನು ನಿರೂಪಿಸಲಾಗುತ್ತದೆ. ದೋಷರಹಿತವಾದ ಶಬ್ದವೇ ಆಗಮ ಎಂದು ಕರೆಸಿಕೊಳ್ಳುತ್ತದೆ. ಶಬ್ದದೋಷಗಳು ಹೀಗಿವೆ : ಅಬೋಧಕತ್ವ, ವಿಪರೀತಬೋಧಕತ್ವ, ಜ್ಞಾತಜ್ಞಾಪಕತ್ವ, ಅನಭಿಮತಪ್ರಯೋಜನತ್ವ, ಅಶಕ್ಯಸಾಧನಪ್ರತಿಪಾದನೆ, ಲಘುವಾದ ಉಪಾಯ-ವಿದ್ದು ಸಹ ಗುರೂಪಾಯದ ಉಪದೇಶ ಮುಂತಾದವುಗಳು.

ಇಲ್ಲಿರುವ ವಿಶೇಷವೇನೆಂದರೆ ಅಬೋಧಕತ್ವ ಹಾಗೂ ವಿಪರೀತಬೋಧಕತ್ವಗಳು ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ವಿರೋಧಿಯಾದ ದೋಷಗಳು. ಪ್ರಾಮಾಣ್ಯವು ಯಾಥಾರ್ಥ್ಯರೂಪವಾದದ್ದು. ಜ್ಞಾತಜ್ಞಾಪಕತ್ವ ಮುಂತಾದವುಗಳು ಉಪಾದೇಯತ್ವ ಲಕ್ಷಣವಾದ ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ವಿರೋಧಿ-ಯಾದದ್ದು. ಅಥವಾ 'ನಿರ್ದೋಷಂ ವಾಕ್ಯಂ' ಎಂಬುದಾಗಿ ಆಗಮದ ಲಕ್ಷಣವು ಸಹ ಸಿದ್ಧಾಂತದಲ್ಲಿ ಅಭಿಪ್ರೇತವಾಗಿದೆ. ವಾಕ್ಯ ಎಂದರೆ ಆಕಾಂಕ್ಷಾ, ಯೋಗ್ಯತಾ ಹಾಗೂ ಸನ್ನಿಧಿವುಳ್ಳ ಪದಗಳ ಸಮೂಹ ಎಂದರ್ಥ.

## ಆಗಮವು ಅಪ್ರಮಾಣವೆಂದು ಆಕ್ಷೇಪ

न चागमो न प्रमाणम्, यथार्थज्ञानजनकत्वनियमाभावात् । यदेव हि तत्त्वमस्यादि वाक्यं कस्यचिद्यथार्थज्ञानजनकं तदेव कस्यचिदयथार्थज्ञानजनकं दृश्यते । लोकेऽपि आप्तत्वाभिमतस्य किञ्चिद्वाक्यं प्रमाजनकं दृश्यते । अन्यच्च वाक्यमप्रमाजनकं दृश्यते । यच्च प्रमाजनकं तदपि न नियमेन । कस्यचित्तेनैव भ्रमोत्पाददर्शनात् । अत एवाप्तो ब्रवीति अन्यन्मयोक्तं अन्यदेव त्वं जानासीति । न चैवम्भूतस्यापि प्रामाण्यं युक्तम् । अति-प्रसङ्गात् ।

ಆಕ್ಷೇಪ ಹೀಗಿದೆ : ಆಗಮವು ಪ್ರಮಾಣವಲ್ಲ. ಯಾವಾಗಲೂ ಸಹ ಯಥಾರ್ಥಜ್ಞಾನವನ್ನೇ ಉಂಟು ಮಾಡುತ್ತದೆ ಎಂಬ ನಿಯಮವು ಆಗಮದಲ್ಲಿ ಇಲ್ಲ. 'ತತ್ತ್ವಮಸಿ' ಮುಂತಾದ ಕೆಲವು ವಾಕ್ಯಗಳು ಕೆಲವರಿಗೆ ಮಾತ್ರವೇ ಯಥಾರ್ಥವಾದ ಜ್ಞಾನವನ್ನು ಉಂಟು ಮಾಡಿರುವುದು ಕಂಡುಬಂದಿದೆ. ಆದರೆ ಮತ್ತೆ ಕೆಲವರಿಗೆ ಈ ವಾಕ್ಯವೇ ಅಯಥಾರ್ಥ ಜ್ಞಾನವನ್ನು ಉಂಟು ಮಾಡುವುದು ಕಂಡುಬರುತ್ತವೆ. ಲೋಕದಲ್ಲೂ ಸಹ ಆಪ್ತ ಎಂದು ನಿಶ್ಚಯವಿರುವ ವ್ಯಕ್ತಿಯು ಆಡುವ ಕೆಲವು ಮಾತು ಮಾತ್ರವೇ ಪ್ರಮಾಣವಾಗಿರುವುದು ಕಂಡು ಬಂದಿದೆ. ಅವನ ಮತ್ತೊಂದು ಮಾತು ಅಪ್ರಮಾಣವಾಗಿರುವುದು ಸಹ ಲೋಕದಲ್ಲಿ ಇದೆ.

ಪ್ರಮಾಣ ಜ್ಞಾನವನ್ನು ಉಂಟು ಮಾಡುವ ವಾಕ್ಯವು ಸಹ ನಿಯಮೇನ ಯಥಾರ್ಥವಾದ ವಿಷಯವನ್ನೇ ತಿಳಿಸುತ್ತದೆ ಎಂಬ ನಿಯಮವೂ ಸಹ ಇಲ್ಲ. ಕೆಲವೊಮ್ಮೆ ಅದೇ ವಾಕ್ಯದಿಂದಲೇ ಭ್ರಾಂತಿ ಬರುವುದು ಸಹ ಕಂಡುಬಂದಿದೆ. ಆದ್ದರಿಂದಲೇ ಕೆಲವೊಮ್ಮೆ ಆಪ್ತನೂ ಸಹ ಹೀಗೆ ಹೇಳುತ್ತಾನೆ. 'ನಾನು ಹೇಳಿದ ವಿಷಯವೇ ಬೇರೆ. ಆದರೆ ನೀನು ತಿಳಿದ ವಿಷಯವೇ ಬೇರೆ' ಎಂಬುದಾಗಿ. ಇಂತಹ ಯಥಾರ್ಥ ಹಾಗೂ ಅಯಥಾರ್ಥ ವಿಷಯಗಳನ್ನು ಹೇಳುವ ವಾಕ್ಯಗಳಿಗೆ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪಲು ಸಾಧ್ಯವಿಲ್ಲ. ಹೀಗೆ ಒಪ್ಪಿದರೆ ಅತಿಪ್ರಸಂಗ ಬರುತ್ತದೆ.

## ನಿರ್ದುಷ್ಟವಾಕ್ಯವು ಯಥಾರ್ಥಜ್ಞಾನವನ್ನೇ ಹುಟ್ಟಿಸುವುದರಿಂದ ಪ್ರಮಾಣವೇ ಆಗಿದೆ

**इति चेन्न । निर्दोषवाक्यस्य नियमेन प्रमाजनकत्वात् । यदत्रोक्तं तत्त्वमस्यादिवाक्यं कस्यचिद् भ्रमजनकमिति । तथैव । तथाऽपि न प्रमाजनकत्वस्वभावरूपप्रामाण्यहानिः । अयथार्थज्ञानजनकत्वस्य श्रोतृदोषनिबन्धनत्वेनास्वाभाविकत्वात् ।**

ಸಮಾಧಾನ ಹೀಗಿದೆ: ನಿರ್ದೋಷವಾದ ವಾಕ್ಯವು ನಿಯಮೇನ ಪ್ರಮಾಜನಕವೇ ಆಗಿರುತ್ತದೆ.

ಆದರಲ್ಲಿ ಯಾವ ವ್ಯತ್ಯಾಸವು ಸಹ ಇಲ್ಲ. ಹಿಂದೆ ಹೇಳಿದ 'ತತ್ತ್ವಮಸಿ' ಮುಂತಾದ ವಾಕ್ಯಗಳು ಕೆಲವರಿಗೆ ಭ್ರಾಂತಿಯನ್ನು ಉಂಟು ಮಾಡಿದೆ ಎಂಬ ಆಕ್ಷೇಪವು ಸಹ ಸರಿಯಲ್ಲ. ಇದನ್ನು ಹೀಗೆಯೇ ಒಪ್ಪುತ್ತೇವೆ. ಕೆಲವರಿಗೆ ಈ ವಾಕ್ಯದ ಶಾಬ್ದಬೋಧವು ಅಪ್ರಮಾಭೂತವಾದದ್ದು ಬಂದರೂ ಸಹ ಆ ವಾಕ್ಯಕ್ಕೆ ಪ್ರಮಾ ಜನಕತ್ವಸ್ವಭಾವ ರೂಪವಾದ ಪ್ರಾಮಾಣ್ಯವು ನಾಶವಾಗುವುದಿಲ್ಲ. ಒಂದು ವಾಕ್ಯದಿಂದ ಅಯಥಾರ್ಥಜ್ಞಾನವು ಹುಟ್ಟುವುದಾದರೆ ಅದಕ್ಕೆ ಕೇಳುವ ವ್ಯಕ್ತಿಯಲ್ಲಿರುವ ದೋಷವು ಸಹ ಕಾರಣವಾಗಿದೆ. ಆದ್ದರಿಂದ ಅಯಥಾರ್ಥಜ್ಞಾನಜನಕತ್ವವು ಅಸ್ವಾಭಾವಿಕವಾಗಿದೆ.

## ಪ್ರಮಾಣದ ಬಗ್ಗೆ ನಿಖರವಾದ ಸಂದೇಶ

**यदपि चोक्तमाप्तत्वाभिमतस्य किञ्चिद्वाक्यं प्रमाजनकं किञ्चिन्नेति । तदपि न । आप्तस्य सर्वत्राप्तत्वाभावात् । यदेव हि प्रमाजनकं तदाप्तिमूलकम् । यच्च अप्रमाजनकं न तदाप्तिमूलकमिति तस्य प्रमाजनकत्वाभावोऽप्रमाजनकत्वं च नाप्तवाक्यस्य प्रामाण्यविघातकम् । यदपि यच्च प्रमाजनकं तदपि न नियमेन प्रमाजनकमिति । तदपि न प्रामाण्यविघातकम् । भ्रमजनकत्वस्य श्रोतृदोषनिबन्धनात् ।।**

ಇದರಂತೆ ಆಪ್ತನ ಕೆಲವು ಮಾತು ಕೆಲವು ಕಡೆ ಮಾತ್ರವೇ ಪ್ರಮಾಣ, ಮತ್ತೆ ಕೆಲವು ಕಡೆ ಪ್ರಮಾಣವಲ್ಲ ಎಂಬ ಆಕ್ಷೇಪವು ಸಹ ಸರಿಯಲ್ಲ. ಆಪ್ತನನ್ನು ಎಲ್ಲಾ ವಿಷಯದಲ್ಲೂ ಸಹ ಆಪ್ತ ಎಂದು ಅಂಗೀಕಾರ ಮಾಡಿಲ್ಲ. ಯಾವ ವಾಕ್ಯವು ಪ್ರಮಾಭೂತವಾದ ವಿಷಯವನ್ನು ಉಂಟು ಮಾಡುತ್ತದೋ ಅಂತಹ ವಾಕ್ಯವು ಮಾತ್ರವೇ ಆಪ್ತಿ ಮೂಲಕವಾದ ವಾಕ್ಯವಾಗಿ ಪ್ರಮಾಣವೂ ಆಗಿರುತ್ತದೆ. ಯಾವ ವಾಕ್ಯವು ಅಪ್ರಮಾಜನಕವೋ ಆ ವಾಕ್ಯವು ಆಪ್ತಿಮೂಲಕ ವಾಕ್ಯವಲ್ಲ.

ಆದ್ದರಿಂದ ವಾಕ್ಯಕ್ಕೆ ಪ್ರಮಾಜನಕತ್ವವಿಲ್ಲದೇ ಇರುವುದು ಅಥವಾ ಅಪ್ರಮಾಜನಕತ್ವವು ಆಪ್ತ ವಾಕ್ಯದ ಪ್ರಾಮಾಣ್ಯವನ್ನು ನಾಶ ಮಾಡುವುದಿಲ್ಲ.

ಪ್ರಮಾಜನಕ ವಾಕ್ಯವು ಸಹ ನಿಯಮೇನ ಪ್ರಮಾಜನಕವಲ್ಲ ಎಂಬ ಆಕ್ಷೇಪವು ಸಹ ಯುಕ್ತ-ವಲ್ಲ. ಇದೂ ಸಹ ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ವಿರೋಧಿಯಾದದ್ದಲ್ಲ. ಪ್ರಮಾಜನಕವಾಗದೆ ಇದ್ದ ಪಕ್ಷದಲ್ಲಿ ಆ ವಾಕ್ಯವು ಭ್ರಮಾಜನಕ ಎಂದಾಗುತ್ತದೆ. ಭ್ರಮಾಜನಕತ್ವವು ಶೋತೃದೋಷ ಅಧೀನವಾಗಿದೆ.

## ನಿರ್ವಿಷಯಕವಾದ ಶಬ್ದವು ಪ್ರಮಾಣವೇ ?

**नन्वथापि शब्दो न प्रमाणं निर्विषयत्वात् । विषयो हि द्विविधः अपरोक्षः परोक्षश्चेति । तत्राद्यः प्रत्यक्षस्य विषयः । द्वितीयस्त्व-नुमानस्य विषयः । न चातिरिक्तं विषयमीक्षामहे येन विषयेण शब्दः प्रमाणं स्यात् ।**

ಆಕ್ಷೇಪ: ಶಬ್ದವು ಪ್ರಮಾಣವಲ್ಲ. ಶಬ್ದಕ್ಕೆ ವಿಷಯವೇ ಇಲ್ಲದೇ ಇರುವುದು ಇದಕ್ಕೆ ಕಾರಣ. ವಿಷಯವು ಎರಡು ವಿಧ: 1. ಅಪರೋಕ್ಷ 2. ಪರೋಕ್ಷ ಎಂಬುದಾಗಿ.

ಮೊದಲನೆಯ ಅಪರೋಕ್ಷಕ್ಕೆ ವಿಷಯವಾದದ್ದು ಪ್ರತ್ಯಕ್ಷ ಪ್ರಮಾಣದಿಂದ ತಿಳಿದುಬರುತ್ತದೆ. ಪರೋಕ್ಷವಾದದ್ದು ಅನುಮಾನದಿಂದ ತಿಳಿಯುವಂತಹ ವಿಷಯ. ಇದಕ್ಕಿಂತ ಅತಿರಿಕ್ತವಾದ ವಿಷಯವನ್ನು ಎಲ್ಲೂ ಸಹ ಕಾಣಲು ಸಾಧ್ಯವಿಲ್ಲ. ಹಾಗೆ ಇದ್ದ ಪಕ್ಷದಲ್ಲಿ ಅಂತಹ ವಿಷಯವನ್ನು ತಿಳಿಸುವ ಮುಖಾಂತರ ಶಬ್ದವು ಪ್ರಮಾಣ ಎಂದಾಗುತ್ತಿತ್ತು.

## ಅತೀಂದ್ರಿಯವಿಷಯಕ್ಕಾಗಿ ಶಬ್ದಪ್ರಾಮಾಣ್ಯ ಅನಿವಾರ್ಯ

**यद्यपि शब्दः परोक्षज्ञानजनकः, तथाऽपि यथा त्वन्मते ज्ञात-ज्ञापनस्य सिद्धसाधकस्य च मानान्तरविषये प्रवृत्तत्वात्**

अप्रामाण्यम् । एवं सर्वोऽपि शब्द असङ्कीर्णविषयाभावाद-
प्रमाणमिति चेत् न । यथाऽपरोक्षविषयत्वाविशेषेऽपि श्रोत्रादि-
विषयासङ्कीर्णविषयसिद्धये चक्षुरादेः प्रामाण्यमवर्जनीयं तद्वत्
परोक्षविषयत्वाविशेषेऽपि अनुमानविषयासङ्कीर्णस्वर्गापवर्गादिगत-
विषयविशेषसिद्धये शब्दप्रामाण्यस्यावर्जनीयत्वात् ।

ಶಬ್ದವು ಪರೋಕ್ಷಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸುತ್ತದೆ. ಆದರೂ ಸಹ ಜ್ಞಾತಜ್ಞಾಪಕವಾದದ್ದು ಹಾಗೂ ಸಿದ್ಧಸಾಧಕವಾದ ವಿಷಯಗಳು ಬೇರೆ ಪ್ರಮಾಣದಿಂದ ಸಿದ್ಧವಾದ ವಿಷಯವನ್ನೇ ತಿಳಿಸುವುದರಿಂದ ಹೇಗೆ ನಿಮ್ಮ ಮತದಂತೆ ಅಪ್ರಮಾಣವೋ ಅದರಂತೆ ಎಲ್ಲಾ ಶಬ್ದಗಳು ಕೂಡಾ ಅಸಂಕೀರ್ಣವಾದ ವಿಷಯವನ್ನೇ ತಿಳಿಸುವುದರಿಂದ ಪ್ರತ್ಯೇಕವಾದ ವಿಷಯವು ಶಬ್ದಕ್ಕೆ ಇಲ್ಲವಾದ್ದರಿಂದ ಇದು ಸಹ ಅಪ್ರಮಾಣವೇ ಆಗಿದೆ.

ಸಮಾಧಾನ : ಅಪರೋಕ್ಷತ್ವ ವಿಷಯ ಎಂಬುದು ಇಬ್ಬರಿಗೂ ಸಮಾನವಾಗಿದೆ. ಕಿವಿ ಮೊದ-ಲಾದ ಇಂದ್ರಿಯಗಳಿಗೆ ವಿಷಯವಾಗದ ಪದಾರ್ಥಗಳು ಕಣ್ಣು ಮುಂತಾದ ಬೇರೆ ಇಂದ್ರಿಯಗಳಿಂದ ಸಹ ತಿಳಿದುಬರುತ್ತವೆ. ಆದ್ದರಿಂದ ಚಕ್ಷುರಾದಿ ಇಂದ್ರಿಯಗಳಿಗೆ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಹೇಳುತ್ತೇವೆ. ಈ ವಿಷಯದಲ್ಲಿ ಅಪರೋಕ್ಷವಿಷಯತ್ವ ಎಂಬ ಧರ್ಮವು ಸಮಾನವಾಗಿದೆ. ಆದರೂ ಸಹ ಪ್ರತ್ಯೇಕವಾಗಿ ಇಂದ್ರಿಯಗಳು ಪ್ರಮಾಣವೇ ಆಗಿದೆ. ಅದರಂತೆ ಅನುಮಾನಾದಿಗಳಿಂದ ತಿಳಿದು ಬರುವ ಸ್ವರ್ಗ, ಮೋಕ್ಷ ಮೊದಲಾದ ಅತೀಂದ್ರಿಯವಾದ ಪದಾರ್ಥವಿಶೇಷಗಳನ್ನು ಸಾಧನೆ ಮಾಡುವುದಕ್ಕೋಸ್ಕರ ಶಬ್ದದ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಅಂಗೀಕರಿಸಲೇಬೇಕಾಗಿದೆ.

## ಅಸಂಕೀರ್ಣವಿಷಯಕವಾದ್ದರಿಂದ ಶಬ್ದವು ಪ್ರಮಾಣ

न हि स्वर्गापवर्गादिगतो विशेषः अनुमानवेद्यः, येन शब्दस्य

निर्विषयत्वं स्यात् । अन्यथा परोक्षविषयत्वाच्छब्द एव प्रमाणम् । अनुमानं तु निर्विषयत्वादप्रमाणमेवेति स्यात् ॥

॥ इति शब्दप्रामाण्यसमर्थनम् ॥

ಸ್ವರ್ಗ, ಅಪವರ್ಗ ಮುಂತಾದವುಗಳಲ್ಲಿರುವ ವಿಶೇಷವು ಅನುಮಾನದಿಂದ ತಿಳಿಯಲು ಸಾಧ್ಯವಿಲ್ಲ. ಆದ್ದರಿಂದ ಶಬ್ದಕ್ಕೆ ವಿಷಯವು ಇದ್ದೇ ಇದೆ. ಹೀಗೆ ಒಪ್ಪದಿದ್ದ ಪಕ್ಷದಲ್ಲಿ ಇದಕ್ಕೆ ವ್ಯತಿರಿಕ್ತವಾಗಿ ಪರೋಕ್ಷ ವಿಷಯವನ್ನು ತಿಳಿಸುವ ಶಬ್ದವೇ ಪ್ರಮಾಣವೆಂದಾಗಿ ಅನುಮಾನಕ್ಕೆ ಯಾವುದೇ ವಿಷಯವಿಲ್ಲವಾದ್ದರಿಂದ ಅದೇ ಅಪ್ರಮಾಣ ಎಂದಾಗಬೇಕಾದೀತು. ಹೀಗೆ ಶಬ್ದಕ್ಕೆ ವಿಷಯಭೂತವಾದ ಸ್ವರ್ಗ-ಅಪವರ್ಗಾದಿಗಳು ಇರುವುದರಿಂದ ಶಬ್ದವು ಪ್ರಮಾಣವೇ ಆಗಿದೆ.

## ತತ್ತ್ವಚಿಂತಾಮಣಿಯಲ್ಲಿ ಶಬ್ದಪ್ರಕರಣ

मणिकारस्तु । अथ शब्दो निरूप्यते । प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम् । ननु शब्दो न प्रमाणम् । तथा हि । करणविशेषः प्रमाणम् । करणं तत् यस्मिन्सति क्रिया भवत्येव ।

न च शब्दे सति प्रमा भवत्येवेति नायं प्रमाणम् । न च, न शब्दः प्रमाणमिति वाक्यप्रामाण्याप्रामाण्ययोर्व्याघातः । अस्याप्रामाण्येऽपि एतदुत्थाप्यानुमानाविसंवादादिति चेत् न । आकाङ्क्षादिमतः पदार्थस्मरणादिव्यापारवतः प्रमाणत्वेन प्रमोत्पत्तेरावश्यकत्वात् । अतथाभूतत्वे च फलाजनकत्वस्य करणान्तरसाम्यात् इत्याह ॥

ಮಣಿಕಾರನು ಮಾಡುವ ಆಕ್ಷೇಪ ಹೀಗಿದೆ: ಶಬ್ದದ ನಿರೂಪಣೆ ಹೀಗಿದೆ: ಪ್ರಯೋಗಕ್ಕೆ ಕಾರಣವಾದ ಪದಾರ್ಥ ತತ್ವಜ್ಞಾನದಿಂದ ಜನ್ಯವಾದದ್ದು ಶಬ್ದ. ಇದು ಪ್ರಮಾಣ.

ಆಕ್ಷೇಪ : ಶಬ್ದವು ಪ್ರಮಾಣವಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಕಾರಣ ಹೀಗಿದೆ: ಕರಣ ವಿಶೇಷವೇ ಪ್ರಮಾಣ. ಯಾವುದು ಇದ್ದಾಗ ನಿಯಮೇನ ಕ್ರಿಯೆಯು ಉಂಟಾಗುತ್ತದೋ ಅದೇ ಕರಣ ಎಂದು ಕರೆಸಿಕೊಳ್ಳುತ್ತದೆ. ಶಬ್ದವು ಇದ್ದಾಗ ಪ್ರಮಾಜ್ಞಾನವು ಬರುತ್ತದೆಂಬ ನಿಯಮವಿಲ್ಲ. ಆದ್ದರಿಂದ ಶಬ್ದವು ಪ್ರಮಾಣವಲ್ಲ. ಶಬ್ದವು ಪ್ರಮಾಣವಾಗದೆ ಇದ್ದ ಕಾರಣದಿಂದ ವಾಕ್ಯದ ಪ್ರಾಮಾಣ್ಯಕ್ಕೂ ಅಪ್ರಾಮಾಣ್ಯಕ್ಕೂ ವಿರೋಧವು ಬರುವುದಿಲ್ಲ. ವಾಕ್ಯವು ಪ್ರಮಾಭೂತವಾದದ್ದು. ಶಬ್ದದಲ್ಲಿ ವಾಕ್ಯಗಳೂ ಒಳಗೊಂಡಿವೆ. ಶಬ್ದವು ಅಪ್ರಮಾಣ. ವಾಕ್ಯವು ಪ್ರಮಾಣ ಎಂದರೆ ಇವೆರಡಕ್ಕೆ ವಿರೋಧ ಬರುತ್ತದೆ ಎಂಬ ಶಂಕೆಯು ಸರಿಯಲ್ಲ. ಶಬ್ದವು ಅಪ್ರಮಾಣವಾದರೂ ಸಹ ಶಬ್ದದಿಂದ ಬರುವ ಅನುಮಾನಕ್ಕೆ ಸಂವಾದಿಯಾಗದೆ ಇರುವ ವಾಕ್ಯವು ಪ್ರಮಾಣವಲ್ಲ ಎಂದು ಆಕ್ಷೇಪದ ಅಭಿಪ್ರಾಯ.

ಆದರೆ ಆಕಾಂಕ್ಷಾದಿಗಳು ಇರುವ ವ್ಯಕ್ತಿಗೆ ಪದಾರ್ಥಸ್ಮರಣ ಮುಂತಾದ ವ್ಯಾಪಾರವು ಸಹ ಇದ್ದಾಗ ಅವಶ್ಯವಾಗಿ ಪ್ರಮಾಜ್ಞಾನವು ಉಂಟಾಗಲೇಬೇಕಾಗಿದೆ. ಒಂದು ವೇಳೆ ಇದನ್ನು ಒಪ್ಪದಿದ್ದರೆ ಅದರಿಂದ ಯಾವುದೇ ಫಲವು ಸಹ ಉಂಟಾಗದೆ ಇರಬೇಕಾದೀತು. ಬೇರೆ ಕರಣಗಳು ಇದ್ದಾಗ ಫಲವು ಉಂಟಾಗದಿದ್ದರೆ ಅದನ್ನು ಕರಣ ಎಂದು ಒಪ್ಪುವುದಿಲ್ಲ. ಅದರಂತೆ ಇಲ್ಲೂ ಸಹ ಕರಣವಿದ್ದೂ ವ್ಯಾಪಾರವೂ ಇದ್ದು, ಪ್ರಮಾರೂಪವಾದ ಫಲವು ಬರದೇ ಇದ್ದಲ್ಲಿ ಆ ಶಬ್ದವು ಪ್ರಮಾಣವಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ.

## ಮಣಿಕಾರ ಹೇಳಿದ ಶಬ್ದಲಕ್ಷಣಕ್ಕೆ ಅಪೌರುಷೇಯ ವಾಕ್ಯದಲ್ಲಿ ಅವ್ಯಾಪ್ತಿ

**तत्र । अपौरुषेयवेदाव्याप्तेः । त्वन्मते प्रतिपुरुषं भारतभेदेना-विद्वत्पट्यमानभारताव्याप्तेश्च ।**

ಮಣಿಕಾರನ ಈ ವಾದವು ಸರಿಯಲ್ಲ. ಅಪೌರುಷೇಯವಾದ ವೇದದಲ್ಲಿ ಮಣಿಕಾರ ಹೇಳಿದ ಶಬ್ದಲಕ್ಷಣಕ್ಕೆ ಅವ್ಯಾಪ್ತಿ ದೋಷವು ಬರುತ್ತದೆ. 'ಪ್ರಯೋಗಹೇತುಭೂತಅರ್ಥತತ್ವಜ್ಞಾನಜನ್ಯಃ ಶಬ್ದಃ ಪ್ರಮಾಣಂ' ಎಂಬುದಾಗಿ ಮಣಿಕಾರನ ಲಕ್ಷಣ. ಈ ಲಕ್ಷಣವು ಅಪೌರುಷೇಯವಾದ ವೇದದಲ್ಲಿ ಬರುವುದಿಲ್ಲ. ಪುರುಷನಿರ್ಮಿತವಲ್ಲವಾದ್ದರಿಂದ ಅಲ್ಲಿ ಪ್ರಯೋಗವೇ ಇರುವುದಿಲ್ಲ. ಇದರಂತೆ ಪ್ರತಿ ವ್ಯಕ್ತಿಗೂ ಸಹ ಓದುವ ಭಾರತ ಮುಂತಾದ ಇತಿಹಾಸಗಳಲ್ಲಿ ಬೇರೆ ಬೇರೆ ಪಾಠಗಳ ಪ್ರಸಕ್ತಿಯಿಂದ ವಿದ್ವಾಂಸರು ಓದದೇ ಇರುವ ಅಥವಾ ವಿದ್ವಾಂಸನಲ್ಲದೆ ಇರುವವನು ಓದುವ ಭಾರತದಲ್ಲಿ ಇರುವ ಶಬ್ದಗಳಲ್ಲಿ ಪ್ರಯೋಗವಿದ್ದರೂ ಸಹ ಅವಿದ್ವಾಂಸನು ಓದುವ ಕಾರಣದಿಂದ ಪ್ರಮಾಜನಕತ್ವವು ಆ ವಾಕ್ಯಗಳಿಂದ ಬರದೇ ಅವ್ಯಾಪ್ತಿ ದೋಷವು ಬರುತ್ತದೆ.

## ಮಹಾಭಾರತದಲ್ಲಿ ಅವ್ಯಾಪ್ತಿ

**न चाविद्वत्पठ्यमानभारतस्यापि ईश्वरीयवाक्यार्थतत्त्वज्ञान-जन्यत्वमस्त्येवेति नाव्याप्तिरिति वाच्यम् । तस्य ईश्वरीय-वाक्यार्थतत्त्वज्ञानजन्यत्वेऽपि त्वद्विवक्षितस्य, वाक्यार्थतत्व-ज्ञानत्वेन तज्जन्यत्वस्य, तत्राभावात् ।**

ಪ್ರಶ್ನೆ : ಅವಿದ್ವತ್‌ಪಠ್ಯಮಾನಭಾರತದಲ್ಲೂ ಸಹ ಈಶ್ವರನ ವಾಕ್ಯಾರ್ಥತತ್ವಜ್ಞಾನಜನ್ಯತ್ವವು ಇರುವ ಕಾರಣದಿಂದ ಲಕ್ಷಣ ಸಮನ್ವಯವಾಗುತ್ತದಲ್ಲವೇ.

ಉತ್ತರ : ಒಂದು ವೇಳೆ ಅವಿದ್ವತ್‌ಪಠ್ಯಮಾನ ಭಾರತದಲ್ಲಿ ಈಶ್ವರೀಯವಾಕ್ಯಾರ್ಥತತ್ವಜ್ಞಾನ ಜನ್ಯತ್ವವನ್ನು ಅಂಗೀಕಾರ ಮಾಡಿ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಹೇಳುವುದಾದರೆ ವಾಕ್ಯಾರ್ಥತತ್ವಜ್ಞಾನತ್ವೇನ ಜನ್ಯತ್ವವು ಅವಿದ್ವತ್‌ಪಠ್ಯಮಾನ ವಾಕ್ಯಗಳಲ್ಲಿ ಇರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಹೀಗೆ ಹೇಳಲು ಬರುವುದಿಲ್ಲ.

## ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ಈಶ್ವರಜ್ಞಾನವು ಅನುಪಯುಕ್ತ

न चान्यत्र ईश्वरज्ञानत्वेन कारणत्वेऽपि अत्र वाक्यार्थज्ञानत्वेन कारणत्वं कल्प्यत इति वाच्यम् । कल्पकाभावात् । न च प्रामाण्यस्य गुणजन्यत्वेन एतद्वाक्यप्रामाण्यान्यथानुपपत्त्या ईश्वरज्ञानस्य तेन रूपेण कारणत्वं कल्प्यत इति वाच्यम् । साक्षात् कर्तृज्ञानस्य प्रामाण्यप्रयोजकत्वेन ईश्वरज्ञानस्य प्रामाण्याप्रयोजकत्वात् । अन्यथा वाक्यप्रामाण्येन तत्कर्तुर्ज्ञानसिद्धिर्न स्यात् । ईश्वरज्ञानेन तद्वाक्यप्रामाण्यस्यान्यथासिद्धत्वात् ।

ಪ್ರಶ್ನೆ : ಬೇರೆ ಸ್ಥಳಗಳಲ್ಲಿ ಈಶ್ವರ ಜ್ಞಾನತ್ವವನ್ನು ಕಾರಣ ಎಂದು ಹೇಳುವಂತೆ ಇಲ್ಲಿ ವಾಕ್ಯಾರ್ಥಜ್ಞಾನತ್ವೇನ ಈಶ್ವರ ಜ್ಞಾನವನ್ನು ಕಾರಣ ಎಂದು ಕಲ್ಪನೆ ಮಾಡಲು ಬರುತ್ತದಲ್ಲವೇ.

ಉತ್ತರ : ಹೀಗೆ ಕಲ್ಪನೆ ಮಾಡುವುದಾದರೆ ಪ್ರಮಾಣವನ್ನು ಹೇಳಬೇಕು. ಆದರೆ ಈ ಕಲ್ಪನೆಗೆ ಮೂಲಭೂತವಾದ ಯಾವ ಪ್ರಮಾಣವೂ ಸಹ ಇಲ್ಲ.

ಪ್ರಶ್ನೆ : ಪ್ರಾಮಾಣ್ಯವು ಗುಣಜನ್ಯವಾಗಿದೆ. ಆದ್ದರಿಂದ ಈ ವಾಕ್ಯದಿಂದ ಜನ್ಯವಾದ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಕೂಡಿಸಬೇಕಾದರೆ ಅನ್ಯಥಾನುಪಪತ್ತಿ ರೂಪವಾದ ಪ್ರಮಾಣದಿಂದ ಈಶ್ವರ ಜ್ಞಾನವನ್ನು ಕಾರಣ ಎಂಬುದಾಗಿ ಹೇಳಲು ಬರುತ್ತದೆಯೇ.

ಉತ್ತರ : ಸಾಕ್ಷಾತ್ ಕರ್ತೃಜ್ಞಾನವೇ ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ಪ್ರಯೋಜಕವೇ ಹೊರತು, ಈಶ್ವರ ಜ್ಞಾನವು ಪ್ರಾಮಾಣ್ಯಜ್ಞಾನವನ್ನು ಕುರಿತು ಪ್ರಯೋಜಕವಲ್ಲ. ಹೀಗೆ ಒಪ್ಪದಿದ್ದರೆ ವಾಕ್ಯವನ್ನು ಪ್ರಮಾಣ ಎಂದು ಒಪ್ಪಿ ಆ ವಾಕ್ಯ ಪ್ರಯೋಗವನ್ನು ಮಾಡುವ ವ್ಯಕ್ತಿಗೆ ಜ್ಞಾನವೇ ಇಲ್ಲದೇ ಇರಬೇಕಾದೀತು ಎಂದು ಆಕ್ಷೇಪ ಬರುತ್ತದೆ.

ಈ ಸ್ಥಳದಲ್ಲೂ ವಾಕ್ಯ ಪ್ರಯೋಗ ಮಾಡುವ ವ್ಯಕ್ತಿಗೆ ತಾನು ಆಡುವ ವಾಕ್ಯದ ಅರ್ಥದ ಜ್ಞಾನವಿಲ್ಲದೇ ಇದ್ದರೂ ಸಹ ಆ ವಾಕ್ಯದಲ್ಲಿ ಈಶ್ವರ ಜ್ಞಾನವನ್ನು ಪ್ರಾಮಾಣ್ಯಕ್ಕೆ ಕಾರಣ ಎಂದು ಹೇಳಲು ಬರುತ್ತದೆ. ಹಾಗೂ ಎಲ್ಲಾ ಜ್ಞಾನಗಳಿಗೂ ಸಹ ಈಶ್ವರ ಜ್ಞಾನವು ಕಾರಣ ಎಂಬುದು ಅನ್ಯಥಾ ಸಿದ್ಧವಾದ ವಿಷಯ. ಆದ್ದರಿಂದ ಇದರಿಂದ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಕೂಡಿಸಲು ಬರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಮಣಿಕಾರನ ಲಕ್ಷಣಕ್ಕೆ ಅವ್ಯಾಪ್ತಿ ದೋಷವು ಇದ್ದೇ ಇದೆ.

## ರುಚಿದತ್ತನ ಪರಿಹಾರವೂ ತಪ್ಪು

**रुचिदत्तस्तु स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नशब्दत्वं लक्षणं तज्जन्यतावच्छेदकं च योग्यशब्दत्वं तच्च मौनिश्लोकादावस्त्वेवेति नाव्याप्तिः । शब्दपदं च ज्ञानस्वरूपयोग्यशब्दपरम् । अतोऽयोग्यताविशिष्टे घटः कर्मत्वमित्यादिशब्देनातिव्याप्तिरित्याह । तन्न । स्वार्थतत्त्वज्ञानाजन्ये वेदे अविद्वत्पठ्यमानभारतादौ च वर्तमानस्य योग्यशब्दत्वस्य तज्जन्यतावच्छेदकत्वायोगात् । अनतिप्रसक्तस्यैवावच्छेदकत्वात् ।**

ರುಚಿದತ್ತನು ಹೇಳುವ ಪರಿಹಾರ ಕ್ರಮ ಹೀಗಿದೆ - ಸ್ವಾರ್ಥ ತತ್ವಜ್ಞಾನ ಜನ್ಯತಾವಚ್ಛೇದಕಾವಚ್ಛಿನ್ನಶಬ್ದತ್ವಂ ಎಂಬುದು ಲಕ್ಷಣ. ತಜ್ಜನ್ಯತಾವಚ್ಛೇದಕವಾದದ್ದು ಯೋಗ್ಯಶಬ್ದತ್ವ. ಇದು ಮೌನಿಶ್ಲೋಕಾದಿಗಳಲ್ಲಿ ಇರುವ ಕಾರಣ ಅವ್ಯಾಪ್ತಿ ದೋಷವು ಬರುವುದಿಲ್ಲ. ಶಬ್ದಪದಕ್ಕೆ ಜ್ಞಾನಸ್ವರೂಪ ಯೋಗ್ಯವಾದ ಶಬ್ದ ಎಂದು ಅರ್ಥ. ಆದ್ದರಿಂದ ಯೋಗ್ಯತಾರಹಿತವಾದ ಘಟಃ ಕರ್ಮತ್ವಂ ಮುಂತಾದ ಶಬ್ದಗಳಲ್ಲಿ ಅತಿವ್ಯಾಪ್ತಿಯು ಬರುವುದಿಲ್ಲ.

ಈ ಪರಿಹಾರವೂ ಸಹ ಸರಿಯಲ್ಲ. ಸ್ವಾರ್ಥತತ್ವಜ್ಞಾನದಿಂದ ಜನ್ಯವಾಗದೆ ಇರುವ ವೇದದಲ್ಲಿ, ಹಾಗೂ ಅವಿದ್ವತ್ ಪಠ್ಯಮಾನವಾದ ಭಾರತಾದಿಗಳಲ್ಲೂ ಸಹ ಯೋಗ್ಯ ಶಬ್ದತ್ವವು ಇದೆ. ಆದರೆ

ಇದಕ್ಕೆ ತಜ್ಜನ್ಯತಾವಚ್ಛೇದಕತ್ವವು ಇರುವುದಿಲ್ಲ. ಅತಿಪ್ರಸಕ್ತವಾಗದೆ ಇರುವ ವಿಷಯವೇ ಅವಚ್ಛೇದಕವಾಗುತ್ತದೆ ಎಂಬ ನಿಯಮವು ಇದೆ.

## ಮೌನಿಶ್ಲೋಕದಲ್ಲಿ ಹೇಳಿದ ಅವ್ಯಾಪ್ತಿ ಅಪರಿಹಾರ್ಯ

**यदपि तच्च मौनिश्लोकादावस्त्वेवेति नाव्याप्तिरिति । तदपि न । मौनिश्लोकस्य स्वार्थतत्त्वज्ञाननिबन्धेन मूलोक्तप्रयोगहेतुभूतार्थ-तत्त्वज्ञानजन्यत्वरूपलक्षणसद्भावात् । अव्याप्तिशङ्कायोगेन तत्परि-हाराय स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नत्वविवक्षायोगात् । वर्णानित्यत्ववादिमते मैनिश्लोकस्यासत्त्वेन तत्र लक्षणव्युत्पा-दनायोगाच्च । न हि त्वन्मतेऽनुच्चारितः शब्दोऽस्ति ।**

ಮೌನಿಶ್ಲೋಕಾದಿಗಳಲ್ಲಿ ಅವ್ಯಾಪ್ತಿ ಪರಿಹಾರ ಮಾಡಿದ ಕ್ರಮವೂ ಸಹ ಸರಿಯಲ್ಲ. ಮೌನಿ ಶ್ಲೋಕವು ಸ್ವಾರ್ಥ ತತ್ವಜ್ಞಾನದಿಂದ ಜನ್ಯವಾಗಿದೆ. ಆದ್ದರಿಂದ ಮೂಲದಲ್ಲೇ ಹೇಳಿದ ಪ್ರಯೋಗ-ಹೇತು ಭೂತ ಅರ್ಥತತ್ವಜ್ಞಾನ ಜನ್ಯತ್ವರೂಪವಾದ ಲಕ್ಷಣವು ಬಂದೇ ಬರುತ್ತದೆ.

ಅವ್ಯಾಪ್ತಿಯ ಸಂಶಯವೇ ಬರದಿರುವಾಗ ಅಂತಹ ದೋಷಪರಿಹಾರಕ್ಕೋಸ್ಕರ ಸ್ವಾರ್ಥ ತತ್ವಜ್ಞಾನ ಜನ್ಯತಾವಚ್ಛೇದಕಾವಚ್ಛಿನತ್ವ ರೂಪವಾದ ಧರ್ಮವನ್ನು ವಿವಕ್ಷೆ ಮಾಡುವುದೇ ಯೋಗ್ಯವಲ್ಲ.

ವರ್ಣವನ್ನು ಅನಿತ್ಯ ಎಂದು ಹೇಳುವ ಮತದಂತೆ ಮೌನಿಶ್ಲೋಕವೇ ಇಲ್ಲವಾದ್ದರಿಂದ ಆ ಸ್ಥಳದಲ್ಲಿ ಲಕ್ಷಣದ ಸಮನ್ವಯವನ್ನು ಮಾಡುವುದೂ ಸಹ ಕೂಡುವುದಿಲ್ಲ.

ನಿಮ್ಮ ಮತದಂತೆಯೂ ಸಹ ಉಚ್ಚಾರಣೆ ಮಾಡದೆ ಇರುವ ಶಬ್ದವು ಯಾವುದೂ ಸಹ ಇಲ್ಲ.

## ಮೌನಿಶ್ಲೋಕದಲ್ಲಿರುವ ಪದಗಳು ಉತ್ಪನ್ನವೆಂದು ಒಪ್ಪಿದರೂ ದೋಷ ತಪ್ಪಿದ್ದಲ್ಲ

**यत्तु मौनिश्लोकस्यानुच्चारितत्वेन कथमर्थज्ञानजन्तवमित्या-शङ्क्य कदाचिदवश्यं तद्धटकपदानामुत्पादस्य स्वीकरणीयत्वेनावश्यं तत्सम्भवात् । अन्यथा तस्यालीकत्वापातेन मौनिलिखितलिप्या-दिना तदनुमानस्याप्यसम्भवादिति समर्थनं तदपि न । तद्धटक-पदानामुत्पादेऽपि वाक्यस्यानुत्पन्नत्वेन वाक्यार्थतत्त्वज्ञान-जन्यत्वसम्भवशङ्कापरिहारात् । न हि अन्यस्य जन्यत्वेना-जन्यस्य तत्त्वजानजन्यत्वासम्भवशङ्कापरिहारो युक्तः । अति-प्रसङ्गात् । कदाचिदुत्पन्नानाम् आशुतरविनाशिनां तद्धटकत्वा-योगाच्च ।**

ಮೌನಿಶ್ಲೋಕವನ್ನು ಉಚ್ಚಾರಣೆ ಮಾಡದೆ ಇರುವುದರಿಂದ ಅಲ್ಲಿ ಅರ್ಥತತ್ವಜ್ಞಾನವು ಹೇಗೆ ಬರುತ್ತದೆ ಎಂದು ಶಂಕಾ ಮಾಡಿ ಈ ರೀತಿ ಪರಿಹಾರ ನೀಡುವ ಕ್ರಮ ಅನುಸರಿಸಲಾಗಿದೆ. ಮೌನಿ ಶ್ಲೋಕಗಳಲ್ಲೂ ಸಹ ಯಾರಿಗೋ ಒಬ್ಬರಿಗೆ ಆ ಶ್ಲೋಕದಲ್ಲಿರುವ ಪದಗಳಿಗೆ ಅರ್ಥ ವ್ಯುತ್ಪತ್ತಿಯನ್ನು ಅಂಗೀಕಾರ ಮಾಡಬೇಕಾಗುತ್ತದೆ.

ಮೌನಿಶ್ಲೋಕದಲ್ಲಿರುವ ಶಬ್ದಗಳು ಉತ್ಪನ್ನ ಎಂದು ಅಂಗೀಕಾರ ಮಾಡುವ ಕಾರಣದಿಂದ ಅಲ್ಲಿ ಅರ್ಥಜ್ಞಾನ ಜನಕತ್ವವನ್ನು ಒಪ್ಪಬೇಕು. ಇಲ್ಲದಿದ್ದರೆ ಮೌನಿ ಶ್ಲೋಕವು ಹೇಗೆ ಅಪ್ರಮಾಣವೋ ಅದರಂತೆ ಮೌನಿಲಿಖಿತವಾದ ಲಿಪ್ಯಾದಿಗಳಿಂದಲೂ ಸಹ ಅದನ್ನು ಅನುಮಾನ ಮಾಡಿಕೊಳ್ಳಲು ಸಹ ಬರದೇ ಇರಬೇಕಾದೀತು ಎಂಬುದಾಗಿ.

ಇದೂ ಸಹ ಸರಿಯಲ್ಲ. ಮೌನಿಶ್ಲೋಕಘಟಿತ ಪದಗಳನ್ನು ಉತ್ಪನ್ನ ಎಂದು ಒಪ್ಪಿದರೂ ಸಹ

ಆ ವಾಕ್ಯವು ಅನುತ್ಪನ್ನವಾದ್ದರಿಂದ ಈ ವಾಕ್ಯವು ಹೇಗೆ ವಾಕ್ಯಾರ್ಥ ತತ್ವಜ್ಞಾನದಿಂದ ಜನ್ಯವಾದೀತು ಎಂಬ ವಾಕ್ಯಾರ್ಥತತ್ವಜ್ಞಾನಜನ್ಯತ್ವಸಂಭವರೂಪವಾದ ಶಂಕೆಯು ಪರಿಹಾರವೇ ಆಗಿಲ್ಲ. ಯಾವುದೋ ಒಂದು ಹುಟ್ಟುವುದರಿಂದ ಹುಟ್ಟದೇ ಇರುವ ಮತ್ತೊಂದಕ್ಕೆ ತತ್ವಜ್ಞಾನ ಜನ್ಯವಲ್ಲ ಎಂಬ ಶಂಕೆಯ ಪರಿಹಾರವನ್ನು ಮಾಡಲು ಬರುವುದಿಲ್ಲ. ಅತಿಪ್ರಸಂಗ ಬರುತ್ತದೆ. ಹಾಗೂ ಯಾವಾಗಲೋ ಒಮ್ಮೆ ಹುಟ್ಟಿದ ಅತಿ ಶೀಘ್ರವಾಗಿ ನಾಶವಾಗುವ ಶಬ್ದಗಳಿಗೆ ವಾಕ್ಯಘಟಕತ್ವವನ್ನು ಸಹ ಹೇಳಲು ಬರುವುದಿಲ್ಲ.

## ಮೌನಿಶ್ಲೋಕಕ್ಕೆ ಉತ್ಪತ್ತಿ ಒಪ್ಪಿದ್ದು ವ್ಯರ್ಥ

**यदपि अन्यथा तस्यालीकत्वापातेनेत्यादि तदपि न । तद्धटक-पदानाम् उत्पत्त्यङ्गीकारेण मौनिश्लोकस्यालीकत्वापरिहारात् ।।**

**न च मौनिश्लोकस्यैवालीकत्वपरिहाराय कदाचिदुत्पत्तिरङ्गीक्रियत इति वाच्यम् । मौनिश्लोकत्वाभावापातात् । न हि अन्येन क्वचिदुत्पन्नस्य मौनिश्लोकत्वं युक्तिमत् । पूर्वमुत्पन्नस्य उत्पत्स्यमानस्य वा इदानीमभावेन लिप्यादिना तदनुमानायोगाच्च । न हि लिपिः मौनिश्लोकमतीतत्वेन एष्यत्वेन वाऽनुमापयति । येन कदाचिदुत्पादाङ्गीकारः सार्थकः स्यात् ।**

ಇದರಂತೆ ಮೌನಿಲಿಖಿತವಾದ ಲಿಪ್ಯಾದಿಗಳಿಗೆ ಅನುಮಾನತ್ವವನ್ನು ಕೂಡಾ ಹೇಳಲು ಬರುವುದಿಲ್ಲ ಎಂಬ ಕಾರಣದಿಂದ ಮೌನಿಶ್ಲೋಕವು ಸುಳ್ಳಾಗಬೇಕಾದೀತು ಎಂಬ ಆಕ್ಷೇಪವನ್ನು ಮಾಡಿದ ಕ್ರಮವು ಸಹ ಸರಿಯಲ್ಲ. ಮೌನಿಶ್ಲೋಕವೇ ಸುಳ್ಳಾಗದಿರಲು ಆ ವಾಕ್ಯಗಳಿಗೆ ಯಾವಾಗಲೋ ಒಮ್ಮೆ ಉತ್ಪತ್ತಿಯನ್ನು ಒಪ್ಪುವುದಾದರೆ ಅದು ಮೌನಿ ಶ್ಲೋಕವೇ ಆಗುವುದಿಲ್ಲ.

ಯಾರೋ ಒಬ್ಬ ವ್ಯಕ್ತಿಯಿಂದ ಯಾವಾಗಲೋ ಒಮ್ಮೆ ಹುಟ್ಟಿದ ಶಬ್ದಗಳು ಮೌನ ಮಾಡುವ ವ್ಯಕ್ತಿಯಿಂದ ಹುಟ್ಟಿದ್ದು ಎಂದು ಹೇಳುವುದು ಯುಕ್ತಿಬದ್ಧವಾದ ವಿಷಯವಲ್ಲ. ಹಿಂದೆ ಹುಟ್ಟದೇ ಮುಂದೂ ಹುಟ್ಟದೇ ಇರುವ ಮೌನಿಶ್ಲೋಕಕ್ಕೆ ಈಗಲೂ ಸಹ ಹುಟ್ಟುವಿಕೆಯನ್ನು ಹೇಳಲು ಬರುವುದಿಲ್ಲವಾದ್ದರಿಂದ ಲಿಪ್ಯಾದಿಗಳಿಂದ ಮೌನಿ ಶ್ಲೋಕದ ಅನುಮಾನವನ್ನೂ ಸಹ ಮಾಡಲು ಬರುವುದಿಲ್ಲ. ಲಿಪಿಯು ಮೌನಿಶ್ಲೋಕವನ್ನು ಹಿಂದೆ ಇತ್ತು ಎಂದಾಗಲಿ ಅಥವಾ ಮುಂದೆ ಬರುತ್ತದೆ ಎಂದಾಗಲಿ ಅನುಮಾನದಿಂದ ತಿಳಿಸಿಕೊಡುವುದಿಲ್ಲ. ಹೀಗೆ ತಿಳಿಸಿಕೊಟ್ಟಿದ್ದಲ್ಲಿ ಮೌನಿಶ್ಲೋಕದ ಉತ್ಪತ್ತಿಯನ್ನು ಒಪ್ಪಿದ್ದು ಸಾರ್ಥಕವಾಗುತ್ತಿತ್ತು.

## 'ಶಬ್ದ' ಎಂದರೆ 'ಜ್ಞಾನಸ್ವರೂಪಯೋಗ್ಯಶಬ್ದ' ಎಂಬುದು ಅಯುಕ್ತ

**यदपि शब्दपदं ज्ञानस्वरूपयोग्यशब्दपरम् । अतो योग्यताविशिष्टे घटः कर्मत्वमित्यादिवाक्ये नातिव्याप्तिरिति । तदपि न । घटः कर्मत्वमानयनं कृतिरित्यस्य निरर्थकत्वात् स्वार्थाभावेन स्वार्थतत्त्वज्ञानजन्यतावच्छेदकावच्छिन्नशब्दत्वस्य सुतरामभावात् अतिव्याप्तेरभावेन शब्दपदस्य ज्ञानस्वरूपयोग्यशब्दपरत्वविवक्षावैयर्थ्यात् ।**

ಶಬ್ದ ಪದವು ಜ್ಞಾನ ಸ್ವರೂಪಯೋಗ್ಯವಾದ ಶಬ್ದಪರ ಎಂದು ಹೇಳಿ ಯೋಗ್ಯತಾರಹಿತವಾದ 'ಘಟಃ ಕರ್ಮತ್ವಂ' ಮುಂತಾದ ವಾಕ್ಯಗಳಲ್ಲಿ ಅತಿವ್ಯಾಪ್ತಿಯನ್ನು ಪರಿಹಾರ ಮಾಡಿದ ಕ್ರಮವೂ ಸಹ ಸರಿಯಲ್ಲ. 'ಘಟಃ ಕರ್ಮತ್ವಂ ಆನಯನಂ ಕೃತಿಃ' ಎಂಬ ವಾಕ್ಯವು ಯಾವುದೇ ಅರ್ಥವನ್ನು ಹೇಳುವುದಿಲ್ಲ. ನಿರರ್ಥಕವಾದ ವಾಕ್ಯವಾದ್ದರಿಂದ ಈ ಶಬ್ದಗಳಿಗೆ ಸ್ವಾರ್ಥವೇ ಇಲ್ಲ. ಆದ್ದರಿಂದ ಇಂತಹ ಸ್ವಾರ್ಥ ರಹಿತವಾದ ಶಬ್ದಗಳಿರುವ ವಾಕ್ಯಗಳಲ್ಲಿ ಸ್ವಾರ್ಥತತ್ತ್ವಜ್ಞಾನ ಜನ್ಯತಾವಚ್ಛೇದಕಾವಚ್ಛಿನ್ನಶಬ್ದತ್ವ ರೂಪವಾದ ಲಕ್ಷಣವನ್ನು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಅತಿವ್ಯಾಪ್ತಿಯೇ

ಇಲ್ಲವಾದ್ದರಿಂದ ಅದರ ಇಲ್ಲದೇ ಇರುವ ಅತಿವ್ಯಾಪ್ತಿಯ ಪರಿಹಾರಕ್ಕೋಸ್ಕರ ಶಬ್ದಪದಕ್ಕೆ ಜ್ಞಾನಸ್ವರೂಪಯೋಗ್ಯಶಬ್ದಪರತ್ವವನ್ನು ವಿವಕ್ಷೆ ಮಾಡುವುದು ವ್ಯರ್ಥ.

## ಯೋಗ್ಯಶಬ್ದತ್ವಾವಚ್ಛಿನ್ನಶಬ್ದತ್ವವೂ ಸಹ ಲಕ್ಷಣವಲ್ಲ

**ननु योग्यशब्दत्वावच्छिन्नशब्दत्वं लक्षणत्वेन विवक्षितम् । तच्च घटः कर्मत्वम् आनयनमित्यादावस्त्येवेत्यतिव्याप्तिरिति तत्परिहाराय विवक्षा युक्तेति चेत् । न । ज्ञानस्वरूपायोग्ये योग्यशब्दत्वव्युत्पादनस्य व्याहतत्वात् । न च ज्ञानस्वरूपायोग्येऽपि अबाधितार्थकत्वलक्षणयोग्यत्वं युक्तमिति वाच्यम् । तज्जन्यज्ञानाविषयस्य तदर्थत्वायोगेन अबाधितार्थकत्वासम्भवात् ।**

ಪ್ರಶ್ನೆ : ಲಕ್ಷಣದಲ್ಲಿ ಯೋಗ್ಯಶಬ್ದತ್ವಾಚ್ಛಿನ್ನಶಬ್ದತ್ವಂ ಎಂಬುದಾಗಿ ಶಬ್ದತ್ವದ ಪರಿಷ್ಕಾರವು ಹೀಗಿದೆ. ಈ ಲಕ್ಷಣವು ಹಿಂದೆ ಹೇಳಿದ 'ಘಟಃ ಕರ್ಮತ್ವಂ ಅನಯನಂ' ಮುಂತಾದ ವಾಕ್ಯಗಳಲ್ಲಿ ಇದ್ದೇ ಇದೆ. ಆದ್ದರಿಂದ ಅತಿವ್ಯಾಪ್ತಿಯು ಬರುತ್ತದೆ. ಇದರ ಪರಿಹಾರಕ್ಕೋಸ್ಕರ ಲಕ್ಷಣದಲ್ಲಿ ಅವಚ್ಛಿನ್ನತ್ವದ ವಿವಕ್ಷೆಯು ಯುಕ್ತವಾಗಿದೆ.

ಉತ್ತರ : ಇದು ಸರಿಯಲ್ಲ. ಜ್ಞಾನ ಸ್ವರೂಪಕ್ಕೆ ಅಯೋಗ್ಯವಾದ ವಿಷಯದಲ್ಲಿ ಯೋಗ್ಯ ಶಬ್ದತ್ವವನ್ನು ಉತ್ಪಾದನೆ ಮಾಡುವುದು ವ್ಯಾಹತವಾಗಿದೆ. ಜ್ಞಾನಸ್ವರೂಪಕ್ಕೆ ಅಯೋಗ್ಯವಾದ ಸ್ಥಳದಲ್ಲೂ ಸಹ ಅಬಾಧಿತವಾದ ಅರ್ಥವುಳ್ಳದ್ದು ಎಂಬ ಯೋಗ್ಯತ್ವ ಲಕ್ಷಣವನ್ನು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಅದರಿಂದ ಹುಟ್ಟಿದ ಜ್ಞಾನಕ್ಕೆ ವಿಷಯವಾಗದೆ ಇದದ್ದು ಅದರ ಅರ್ಥವಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ. ಆದ್ದರಿಂದ ಅಬಾಧಿತವಾದ ಅರ್ಥ ಉಳ್ಳದ್ದು ಎಂಬ ಲಕ್ಷಣವನ್ನೇ ಹೇಳಲು ಬರುವುದಿಲ್ಲ.

## ವ್ಯಾಘಾತದೋಷದ ಪರಿಹಾರ

यदपि न च न शब्दः प्रमाणमिति वाक्यप्रामण्याप्रामाण्ययोर्व्याघात इति । तदपि न । न शब्दः प्रमाणमिति वाक्ये पूर्वपक्ष्याशङ्कितस्य अविलम्बेन प्रमाजनकत्वरूपप्रामाण्याभावस्य सत्त्वेऽपि शब्दप्रामाण्यप्राप्त्यभावेन व्याघाताभावात् । न हि परेण शब्दस्य बाधितार्थकत्वरूपमप्रामाण्यमुक्तम् । येन शब्दो न प्रमाणमिति वाक्यप्रामाण्याप्रामाण्ययोर्व्याघातः स्यात् । अत एव, एतदप्रामाण्ये एतद्विषयीभूतशब्दाप्रामाण्यबाधेन शव्दप्रामाण्याभ्युपगमात् एतत्प्रामाण्ये साक्षादेवेत्युभयथाऽपि व्याघात इत्यर्थ इति रुचिदत्तोक्तं निरस्तम् । शब्दो न प्रमाणमिति वाक्यस्य शङ्किताप्रामाण्ययुक्तत्वेऽपि विषयबाधाभावेन शब्दप्रामाण्यप्रसक्त्यभावेन व्याघाताभावात् ।

ಶಬ್ದವು ಪ್ರಮಾಣವಲ್ಲ ಎಂದು ಹೇಳಿದರೆ ವಾಕ್ಯ ಪ್ರಾಮಾಣ್ಯ ಅಪ್ರಾಮಾಣ್ಯಗಳಿಗೆ ವ್ಯಾಹತಿ ಬರುತ್ತದೆ ಎಂಬ ಆಕ್ಷೇಪವನ್ನು ಹಿಂದೆ ಮಾಡಲಾಯಿತು. ಇದೂ ಸಹ ಸರಿಯಲ್ಲ. 'ನ ಶಬ್ದಃ ಪ್ರಮಾಣಂ' ಎಂಬ ವಾಕ್ಯದಲ್ಲಿ ಪೂರ್ವಪಕ್ಷಿಯು ಆಶಂಕೆ ಮಾಡಿದ ಅವಿಲಂಬೇನ ಪ್ರಮಜನಕತ್ವ ರೂಪವಾದ ಪ್ರಾಮಾಣ್ಯಾಭಾವವು ಇದ್ದರೂ ಸಹ ಶಬ್ದ ಪ್ರಾಮಾಣ್ಯ ಪ್ರಾಪ್ತಿಯು ಇಲ್ಲದೇ ಇರುವುದರಿಂದ ವ್ಯಾಘಾತವನ್ನೇ ಹೇಳಲು ಬರುವುದಿಲ್ಲ.

ಪರಕೀಯನು ಬಾಧಿತಾರ್ಥಕತ್ವರೂಪವಾದ ಅಪ್ರಾಮಾಣ್ಯವನ್ನು ಶಬ್ದಕ್ಕೆ ಹೇಳಿಲ್ಲ. ಹೀಗೆ ಹೇಳಿದ್ದಲ್ಲಿ ಹಿಂದೆ ಹೇಳಿದಂತೆ ವ್ಯಾಹತಿಯು ಬರುವ ಸಂಭವವಿತ್ತು. ಹೀಗೆ ಹೇಳಿದ ಕಾರಣದಿಂದಲೇ ರುಚಿದತ್ತ ಹೇಳಿದ ವ್ಯಾಘಾತವನ್ನೂ ಸಹ ನಿರಾಕರಿಸಿದಂತಾಯಿತು. 'ನ ಶಬ್ದಃ

ಪ್ರಮಾಣಂ' ಎಂಬ ವಾಕ್ಯವು ಅಪ್ರಮಾಣವಾದರೆ ಇದಕ್ಕೆ ವಿಷಯವಾದ ಶಬ್ದವೂ ಅಪ್ರಮಾಣವಾಗುವುದರಿಂದ ಅದನ್ನು ಬಾಧಿಸಿ ಶಬ್ದ ಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪಬೇಕು. ಶಬ್ದಪ್ರಾಮಾಣ್ಯವನ್ನು ಒಪ್ಪಿದರೆ ಈ ವಾಕ್ಯವು ಅಪ್ರಮಾಣವಾಗುತ್ತದೆ.

ಹೀಗೆ ವ್ಯಾಹತಿಯನ್ನು ಉಪಪಾದನೆ ಮಾಡಲಾಗಿದೆ. ಆದರೆ ಇದು ಸರಿಯಲ್ಲ. ಶಬ್ದವು ಪ್ರಮಾಣವಲ್ಲ ಎಂಬ ವಾಕ್ಯವು ಅಪ್ರಮಾಣಶಂಕಾ ಯುಕ್ತವಾದರೂ ಸಹ ಆ ವಾಕ್ಯದಿಂದ ಜನ್ಯವಾದ ವಿಷಯವು ಬಾಧಿತವಲ್ಲ. ಆದ್ದರಿಂದ ಶಬ್ದ ಪ್ರಾಮಾಣ್ಯದ ಪ್ರಸಕ್ತಿಯೇ ಇಲ್ಲವಾದ್ದರಿಂದ ವ್ಯಾಘಾತವನ್ನು ತೋರಿಸಲು ಬರುವುದಿಲ್ಲ.

## ವ್ಯಾಹತಿಪರಿಹಾರಕ್ಕೆ ಅವಿಸಂವಾದವು ಅಪ್ರಯೋಜಕ

**यदपि अस्याप्रामाण्येऽप्येतदुत्थाप्यानुमानाविसंवादादिति समाधानम् । तदपि न । अविसंवादादित्यस्य न व्याघात इति प्रकृतसाध्यासाधकत्वात् । न हि माता वन्ध्येति वक्तारं प्रतिं व्याघाते चोदिते मातृत्वं प्रामाणिकमिति वचनं युक्तिमत् । येन शब्दो न प्रमाणमित्यत्र व्याघातपरिहाराय शब्दाप्रामाण्येऽनुमानचोदनं युक्तं स्यात् ।**

ಈ ವಾಕ್ಯವು ಅಪ್ರಮಾಣವಾದರೂ ಸಹ ಈ ವಾಕ್ಯದಿಂದ ಹುಟ್ಟುವ ಅನುಮಾನಕ್ಕೆ ಸಂವಾದವೇ ಇಲ್ಲದೇ ಹೋಗಬೇಕಾದೀತು ಎಂಬ ಸಮಾಧಾನವೂ ಸಹ ಸರಿಯಲ್ಲ. ವ್ಯಾಹತಿಯನ್ನು ಪರಿಹಾರ ಮಾಡಲು ಹೊರಟ ಸಂದರ್ಭದಲ್ಲಿ ಅವಿಸಂವಾದವನ್ನು ಹೇಳಿದರೆ ಅದರಿಂದ ಯಾವ ಪ್ರಯೋಜನವು ಸಹ ಇಲ್ಲ. 'ನನ್ನ ತಾಯಿಯು ಬಂಜೆ' ಎಂದು ಹೇಳುವ ವ್ಯಕ್ತಿಗೆ ವ್ಯಾಹತಿಯನ್ನು ಲೋಕದಲ್ಲಿ ಹೇಳುತ್ತಾರೆ. ತಾಯಿ ಎಂದು ಹೇಳಿದಾಗಲೇ ಬಂಜೆ ಅಲ್ಲ ಎಂಬ ವಿಷಯವು ಸ್ಪಷ್ಟ. ಮತ್ತೆ ಬಂಜೆ ಎಂದು ಹೇಳಿದರೆ ಅವನ ಮಾತು ಅಪ್ರಮಾಣ. ಹೀಗೆ

ಆಕ್ಷೇಪ ಮಾಡಿದಾಗ ಇದಕ್ಕೆ ಉತ್ತರವಾಗಿ ಮಾತೃತ್ವವು ಪ್ರಾಮಾಣಿಕ ಎಂಬ ಉತ್ತರವನ್ನು ಕೊಟ್ಟರೆ ಈ ಉತ್ತರದಿಂದ ಯಾವ ಪ್ರಯೋಜನವೂ ಸಹ ಇಲ್ಲ.

ಇದರಂತೆ 'ಶಬ್ದಃ ನ ಪ್ರಮಾಣಂ' ಎಂಬ ವಾಕ್ಯಕ್ಕೆ ವ್ಯಾಹತಿಯ ದೋಷವನ್ನು ಹೇಳಿದರೆ ಇದರ ಪರಿಹಾರಕ್ಕಾಗಿ ಶಬ್ದವು ಅಪ್ರಮಾಣವಾದರೆ ಅನುಮಾನವನ್ನು ಮಾಡಲು ಬರುವುದಿಲ್ಲ ಎಂಬ ಆಕ್ಷೇಪವನ್ನು ಮಾಡುವುದು ಯುಕ್ತವಲ್ಲ.

## ರುಚಿದತ್ತನ ವ್ಯಾಖ್ಯಾನ ನಿರಾಕರಣೆ

यत्तु शब्दस्य प्रमायामजनकत्वेऽपि शब्दौ न प्रमाणतया व्यवहर्तव्यः प्रमायोगव्यवच्छिन्नत्वाभावादित्याद्युत्थापितानुमानस्येत्यर्थ इति रुचिदत्तव्याख्यानं तदप्ययुक्तम् । न व्याघात इति पूर्ववाक्येनान्वयानिरूपणात् बाधितार्थकत्वाबाधितार्थकत्वाभ्यां व्याघातशङ्कायास्त्वथैव व्युत्पादितत्वात् अप्रामाण्येऽपीति मूलस्य बाधितार्थकत्वेऽपीति व्याख्यानस्योचितत्वेन प्रमायामजनकत्वेऽपीति व्याख्यानायोगाच्च ।

ಶಬ್ದವು ಪ್ರಮಾಜನಕವಾಗದೇ ಇದ್ದರೂ ಸಹ ಶಬ್ದವನ್ನು ಪ್ರಮಾಣವಾಗಿ ವ್ಯವಹಾರ ಮಾಡಬೇಕಾಗಿಲ್ಲ. ಪ್ರಮಾಯೋಗವ್ಯವಚ್ಛಿನ್ನತ್ವವು ಅಲ್ಲಿ ಇಲ್ಲ ಮುಂತಾದ ವಿಷಯವನ್ನು ಹೇಳಿ ರುಚಿದತ್ತನು ದೋಷವನ್ನು ಪರಿಹಾರ ಮಾಡಿಕೊಳ್ಳುವ ಪ್ರಯತ್ನ ಮಾಡಿದ್ದಾನೆ. ಅದು ಸರಿಯಲ್ಲ.

ಹಿಂದೆ ಹೇಳಿದ 'ನ ವ್ಯಾಘಾತಃ' ಎಂಬ ವಾಕ್ಯಕ್ಕೂ ಈ ವಾಕ್ಯಕ್ಕೂ ಯಾವುದೇ ಅನ್ವಯವನ್ನು ತೋರಿಸಲು ಬರುವುದಿಲ್ಲ. ಹಾಗೂ ಬಾಧಿತಾರ್ಥಕತ್ವ ಹಾಗೂ ಅಬಾಧಿತಾರ್ಥಕತ್ವಗಳನ್ನು ಹೇಳಿ ವ್ಯಾಘಾತವಿದೆ ಎಂಬ ಸಂಶಯವನ್ನು ನೀನೇ ಹುಟ್ಟುಹಾಕಿರುವ ಕಾರಣ ಅಪ್ರಾಮಾಣ್ಯವಿದ್ದರೂ ಸಹ

ಎಂಬ ಮೂಲಕ್ಕೆ ಬಾಧಿತಾರ್ಥಕತ್ವ ಇದ್ದರೂ ಸಹ ಎಂಬ ವ್ಯಾಖ್ಯಾನವೇ ಯೋಗ್ಯವಾಗಿದೆ. ಆದ್ದರಿಂದ ಪ್ರಮಾಯೋಗ ಅಜನಕವಾದರೂ ಸಹ ಎಂಬ ವ್ಯಾಖ್ಯಾನವನ್ನು ಮಾಡುವುದು ಸರಿಯಲ್ಲ.

## ಅಪ್ರಾಮಾಣ್ಯವು ದ್ವಿವಿಧ-ಪಕ್ಷಧರ

**पक्षधरस्तु । द्विविधं हि अप्रामाण्यम् । प्रमायामजनकत्वम् अप्रमाजनकत्वं चेति । तत्र द्वितीयाभ्युपगमस्य विषयबाधनान्तरीयकत्वेऽपि प्रथमे न तथेत्याह एतदिति । न च प्रमाऽजनकत्वे प्रमाणोत्थापकत्वमपि कथमिति वाच्यम् । शब्देन पदार्थमात्रस्मरणे तदसंसर्गाग्रहेणोक्तानुमानावतारसभवादिति भावः ।**

ಪಕ್ಷಧರನ ಅಭಿಪ್ರಾಯವೂ ಹೀಗಿದೆ - ಅಪ್ರಾಮಾಣ್ಯವು ಎರಡು ವಿಧ : 1. ಪ್ರಮಾಜ್ಞಾನವನ್ನೇ ಹುಟ್ಟಿಸುವುದಿಲ್ಲ. 2. ಮತ್ತೊಂದು ಅಪ್ರಮಾಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸುವುದು.

ಇವೆರಡರಲ್ಲಿ ಎರಡನೆಯ ಪಕ್ಷವು ವಿಷಯಕ್ಕೆ ಬಾಧಕವಾಗದೇ ಇದ್ದರೂ ಸಹ ಮೊದಲನೆಯದು ವಿಷಯಕ್ಕೆ ಬಾಧಕವಾಗುತ್ತದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಏತತ್ ಎಂಬ ವಾಕ್ಯವು ಹೊರಟಿದೆ.

ಪ್ರಶ್ನೆ: ಪ್ರಮಾಜನಕವಾಗದೆ ಇದ್ದರೆ ಅದು ಹೇಗೆ ಪ್ರಮಾಣವನ್ನು ಉತ್ಥಾಪನೆ ಮಾಡಲು ಸಾಧ್ಯ.

ಉತ್ತರ: ಶಬ್ದದಿಂದ ಕೇವಲ ಪದಾರ್ಥದ ಸ್ಮರಣೆ ಮಾತ್ರವೇ ಬರುತ್ತದೆ. ಅದರ ಸಂಬಂಧಗ್ರಹಣವು ಆಗುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಅನುಮಾನದಿಂದ ಸಂಬಂಧವು ತೋರುತ್ತದೆ. ಹೀಗೆ ಪ್ರಮಾಜನಕವಾಗದೇ ಇದ್ದರೂ ಸಹ ಅನುಮಾನ ರೂಪವಾದ ಪ್ರಮಾಣವನ್ನು ಉತ್ಥಾಪನೆ ಮಾಡಲು ಸಾಧ್ಯವಿದೆ.

अनुमानं च शब्दो न प्रमाणतया व्यवहर्तव्य इत्याकारकम् । अन्यथा प्रमायोगव्यवच्छिन्नत्वस्यैव प्रमाकरणत्वरूपतया साध्याविशेषादित्याह । स स्थूलदृश्वा । द्वितीयपक्षस्यैव विषयबाधनान्तरीयकत्वेन द्वितीयाभ्युपगमस्येत्युक्त्ययोगात् ।। एतदुत्थाप्यानुमानाविसंवादादित्यस्य पूर्ववाक्येन सङ्गत्यनिरूपणाच्च ।।

ಅನುಮಾನವು ಹೀಗಿದೆ - ಶಬ್ದವು ಪ್ರಮಾಣ ಎಂಬುದಾಗಿ ವ್ಯವಹಾರ ಮಾಡಲು ಯೋಗ್ಯವಲ್ಲ. ಏಕೆಂದರೆ ಪ್ರಮಾಯೋಗ ವ್ಯವಚ್ಛಿನ್ನವಾದದ್ದೇ ಪ್ರಮಾಕರಣವಾದದ್ದು. ಆದ್ದರಿಂದ ಹೇತು ಮತ್ತು ಸಾಧ್ಯಗಳು ಒಂದೇ ಆಗುವ ಕಾರಣ ಸಾಧ್ಯ ಅವೈಶಿಷ್ಟ್ಯರೂಪವಾದ ದೋಷವು ಬರುವುದರಿಂದ ಅನುಮಾನವು ಅವಶ್ಯಕವಾಗಿದೆ.

ಈ ಸ್ಥೂಲದೃಷ್ಟಿ ಇರುವ ಪಕ್ಷಧರನ ಮತವು ಸರಿಯಲ್ಲ. ಎರಡನೆಯ ಪಕ್ಷವು ವಿಷಯ ಬಾಧದಿಂದ ವ್ಯಾಪ್ತವಾಗಿದೆ ಎಂದು ಹೇಳಿ 'ದ್ವಿತೀಯಾಭ್ಯುಪಗಮಸ್ಯ' ಮುಂತಾದ ವಾಕ್ಯದಿಂದ ಅದನ್ನು ಉಪಪಾದನೆ ಮಾಡಲು ಪ್ರಯತ್ನಿಸಲಾಗಿದೆ. ಇದು ಸರಿಯಲ್ಲ. ಈ ವಾಕ್ಯಕ್ಕೂ ಈ ಹಿಂದೆ ಬಂದ 'ಅನುಮಾನಾವಿಸಂವಾದಾತ್' ಎಂಬ ವಾಕ್ಯಕ್ಕೂ ಯಾವುದೇ ಸಂಗತಿಯನ್ನು ನಿರೂಪಣೆ ಮಾಡಲು ಬರುವುದಿಲ್ಲ.

यत्तु अनुमानं च शब्दो न प्रमाणतया व्यवहर्तव्य इत्याकारकमिति तदपि न । नाममात्रे विवादायोगेन शब्दवाच्यत्वाभावसमर्थनवैय्यर्थ्यात् । यदपि अन्यथा प्रमायोगव्यवच्छिनत्वस्यैव प्रमाकरणत्वरूपतया साध्याविशेषादिति । तत्र वक्तव्यम् – प्रमायोगव्यवच्छिन्नत्वाभावेविवादोऽस्ति न वा । नाद्यः तस्य

सन्दिग्धत्वेन हेतूकरणायोगात् । द्वितीये नाममात्रे विवादायोगेन अनुमानवैय्यर्थ्यमेव दोष इति ।। छ ।।

## इति मण्युक्तागमलक्षणभङ्गः

ಅನುಮಾನದ ಆಕಾರವನ್ನು ಈ ರೀತಿ ಪಕ್ಷಧರನು ಹೇಳಿದ್ದಾನೆ: 'ಶಬ್ದಃ ನ ಪ್ರಮಾಣತಯಾ ವ್ಯವಹರ್ತವ್ಯಃ ಇತ್ಯಾಕಾರಕಂ' ಎಂಬುದಾಗಿ ಇದು ಸರಿಯಲ್ಲ. ಕೇವಲ ಹೆಸರಿನಲ್ಲಿ ವಿವಾದವನ್ನು ಮಾಡುವುದು ಯೋಗ್ಯವಲ್ಲ. ಆದ್ದರಿಂದ ಶಬ್ದವಾಚ್ಯತ್ವವನ್ನು ಇಲ್ಲ ಎಂಬುದಾಗಿ ಸಮರ್ಥನೆ ಮಾಡುವುದು ವ್ಯರ್ಥ. ಇದರಂತೆ ಸಾಧ್ಯವೈಶಿಷ್ಟ್ಯವನ್ನು ಹೇಳಲಾಯಿತು. ಅದೂ ಸಹ ಸರಿಯಲ್ಲ.

ಏಕೆಂದರೆ ಪ್ರಮಾಯೋಗವ್ಯವಚ್ಛಿನ್ನತ್ವಾಭಾವ ಎಂಬುದು ಹೇತು. ಈ ಅಂಶದಲ್ಲಿ ವಿವಾದವಿದೆಯೋ ಇಲ್ಲವೋ ? ಎಂಬ ಪ್ರಶ್ನೆ ಬರುತ್ತದೆ. ವಿವಾದವಿಲ್ಲ ಎಂದು ಹೇಳಲು ಬರುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ಹಿಂದೆ ಹೇಳಿದಂತೆ ಹೆಸರಿನಲ್ಲೇ ವಿವಾದವು ಸರಿಯಲ್ಲವಾದ್ದರಿಂದ ಅನುಮಾನವೈಯರ್ಥ್ಯವೇ ದೋಷ. ವಿವಾದವಿದೆ ಎನ್ನುವ ಪಕ್ಷದಲ್ಲಿ ಸಂದಿಗ್ಧವಾದ್ದರಿಂದ ಇದನ್ನು ಹೇತುವನ್ನಾಗಿ ಮಾಡಲು ಬರುವುದಿಲ್ಲ. ಹೀಗೆ ಮಣಿಕಾರ ಹೇಳಿದ ಆಗಮದ ಲಕ್ಷಣವು ಯಾವುದೇ ಕಾರಣದಿಂದಲೂ ಸಹ ಸರಿಯಲ್ಲ.

ಇಲ್ಲಿಗೆ ಮಣ್ಯುಕ್ತಆಗಮಲಕ್ಷಣಭಂಗವು ಸಮಾಪ್ತ.

# स्वमते शब्दस्वातन्त्र्यसमर्थनम्

ननु शब्दो न स्वातन्त्र्येण प्रमाणम् । प्रवृत्तिनिवृत्तिजननोपयोगिज्ञानजननसामर्थ्यविधुरत्वात् । तथा हि । इदमहं कुर्यामिदं मया कार्यं, ममेदमिष्टसाधनमित्यादि जानं प्रवर्तकम् । नेदं

कुर्यामिदं मया न कार्यं, ममेदमनिष्टसाधनं इत्यादिज्ञानं निवर्तकम् इत्यविवादम् । प्रवर्तकश्च पुरुषः, इदमहं कुर्याम्, इदं मया कार्यं, ममेदमिष्टसाधनत्वमिति न प्रयुङ्क्ते । किं तु त्वं कुरु, त्वयेदं कार्यम्, तवेदमिष्टसाधनमित्याद्येव वदति ।

एवं निवर्तकपुरुषस्यापि प्रयोगो द्रष्टव्यः । न च त्वं कुरु इत्यादि मध्यमपुरुषयुष्मच्छब्दघटितस्य शब्दस्य अस्मच्छब्दोत्तमपुरुषोल्लेखिधीजननसामर्थ्यम् अस्ति । अन्यथा घटोऽस्तीति वाक्यस्यापि पटशब्दोल्लोखिनी धीजनकत्वं स्याद् । अविशेषात् । तस्मादकामेनापि त्वं कुर्वित्यादि शब्दात् युष्मच्छब्दमध्यमपुरुषोल्लेखिनी धीरुदेतीति अस्मच्छब्दाद्युल्लेखिप्रवर्तकज्ञानं तु अनुमानादिना भवतीत्यभ्युपगन्तव्यम् ।।

## ಸ್ವಮತರೀತ್ಯಾ ಶಬ್ದಸ್ವಾತಂತ್ರ್ಯ ಸಮರ್ಥನೆ:

ಆಕ್ಷೇಪ : ಶಬ್ದವು ಸ್ವತಂತ್ರವಾಗಿ ಪ್ರಮಾಣವಲ್ಲ. ಪ್ರವೃತ್ತಿನಿವೃತ್ತಿಜನನಕ್ಕೆ ಉಪಯೋಗಿಯಾದ ಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸುವ ಸಾಮರ್ಥ್ಯವು ಶಬ್ದಕ್ಕೇ ಇಲ್ಲ. ಅದು ಹೀಗಿದೆ. ಇದನ್ನು ನಾನು ಮಾಡುತ್ತೇನೆ. ಇದು ನನ್ನಿಂದ ಮಾಡಲ್ಪಡಬೇಕು. ಇದು ನನಗೆ ತುಂಬಾ ಇಷ್ಟವಾದದ್ದು ಮುಂತಾದ ಜ್ಞಾನವು ನಾವು ವಿಷಯದಲ್ಲಿ ಪ್ರವೃತ್ತಿ ಮಾಡಲು ಕಾರಣ. ನಾನು ಇದನ್ನು ಮಾಡಬಾರದು. ಇದು ನನ್ನಿಂದ ಮಾಡಲ್ಪಡಬಾರದು. ಇದು ನನಗೆ ಇಷ್ಟಸಾಧನವಲ್ಲ ಮುಂತಾದ ಜ್ಞಾನವು ವಿಷಯದಲ್ಲಿ ಪ್ರವೃತ್ತಿ ಮಾಡದೇ ಇರಲು ಕಾರಣ ಎಂಬ ವಿಷಯದಲ್ಲಿ ಯಾವುದೇ ವಿವಾದವಿಲ್ಲ.

ಪ್ರವರ್ತಕನಾದವನು ಪುರುಷ. ಅವನು ಇದನ್ನು ನಾನು ಮಾಡುತ್ತೇನೆ. ಇದು ನನ್ನಿಂದ

ಮಾಡಲ್ಪಡಬೇಕಾದ ಕಾರ್ಯ. ಇದು ನನಗೆ ಇಷ್ಟಸಾಧನ ಎಂಬುದಾಗಿ ವಾಕ್ಯವನ್ನು ಪ್ರಯೋಗ ಮಾಡುವುದಿಲ್ಲ. ಮತ್ತೇನೆಂದರೆ ನೀನು ಮಾಡು. ಇದು ನಿನ್ನಿಂದ ಮಾಡಲ್ಪಡಬೇಕು. ಇದು ನಿನಗೆ ಇಷ್ಟಸಾಧನ ಮುಂತಾದ ರೀತಿಯಲ್ಲೇ ವಾಕ್ಯ ಪ್ರಯೋಗವನ್ನು ಮಾಡುತ್ತಾನೆ. ಇದರಂತೆ ನಿವರ್ತಕ ಪುರುಷನ ಪ್ರಯೋಗವು ಸಹ ಇದೆ. 'ನೀನು ಮಾಡು ತ್ವಂ ಕುರು' ಮುಂತಾದ ವಾಕ್ಯಗಳಲ್ಲಿ ಮಧ್ಯಮಪುರುಷವಿದೆ. ಹಾಗೂ ಯುಷ್ಮತ್ ಶಬ್ದವು ಸಹ ಇದೆ. ಇಂತಹ ವಾಕ್ಯಕ್ಕೆ ಅಸ್ಮತ್ ಶಬ್ದ ಹಾಗೂ ಉತ್ತಮ ಪುರುಷ ಉಲ್ಲೇಖ ಮಾಡುವ ಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸುವ ಸಾಮರ್ಥ್ಯವು ಇಲ್ಲ. ಒಂದು ವೇಳೆ ಹೀಗೆ ಒಪ್ಪಿದರೆ ಘಟವು ಇದೆ ಎಂಬ ವಾಕ್ಯವು ಸಹ ಪಟವು ಇದೆ ಎಂಬ ಜ್ಞಾನವನ್ನು ಹುಟ್ಟಿಸಬೇಕಾದೀತು. ಯಾವುದೇ ವ್ಯತ್ಯಾಸವಿಲ್ಲ. ಆದ್ದರಿಂದ ಇಷ್ಟವಿಲ್ಲದಿದ್ದರೂ ಸಹ ತ್ವಂ ಕುರು ಮುಂತಾದ ಶಬ್ದಗಳಿಂದ ಯುಷ್ಮತ್‌ಶಬ್ದ ಹಾಗೂ ಮಧ್ಯಮಪುರುಷ ಇರುವ ಕ್ರಿಯಾಪದದ ಉಲ್ಲೇಖಿಯಾದ ಜ್ಞಾನವು ಹುಟ್ಟುತ್ತದೆ. ಇದರಿಂದ ಅಸ್ಮತ್ ಶಬ್ದಾದಿಗಳನ್ನು ಉಲ್ಲೇಖ ಮಾಡುವ ಪ್ರವರ್ತಕ ಜ್ಞಾನವು ಅನುಮಾನಾದಿಗಳಿಂದ ಹುಟ್ಟುತ್ತದೆ ಎಂಬುದಾಗಿ ಅಂಗೀಕಾರ ಮಾಡಬೇಕು.

उच्यते । व्युत्पत्त्यपेक्षो हि शब्दोऽर्थप्रत्यायकः । व्युत्पत्तिश्च घटादिशब्दानामन्यप्रकारा त्वमहमादिशब्दानामन्यप्रकारा । अतो घटादिशब्दाः स्वव्युत्पत्तिप्रकारानुरोधेन घटादिशब्दोल्लेखिनीं धियमुत्पादयन्ति। त्वमहमादिशब्दास्तु व्युत्पत्तिग्रहकाले सम्बोध्यत्वप्रयोक्तृत्वादिप्रयोगोपाधिका एते शब्दा इति गृहीतत्वात् तत्तच्छब्दोल्लेखिनी धियं जनयन्ति । तथा हि युष्मच्छब्दस्य संबोध्यत्वप्रयोगोपाधिकत्वात् प्रयोक्ता अहं कुर्यामिति बोधजननाय त्वमिति युष्मच्छब्दं प्रयुङ्क्ते । तदधीनत्वात् कुर्विति मध्यमपुरुषं प्रयुङ्क्ते । तस्माच्च शब्दात् श्रोतुर्व्युत्पत्तिवशेन अस्मच्छब्दोत्तमपुरुषान्तशब्दोल्लेखिनी धीरुदेति । एवमहं कुर्यामि-

